IMPACT FACTOR : 3.105
ISSN : 2249 - 2313
षाण्मासिकी संस्कृतशोधपत्रिका
Half Yearly Peer Reviewed Sanskrit Research Journal
Vol. XIII October, 2020 - March, 2021 Issue No. 2
वर्षम् १३ अक्टूबर २०२० - मार्च २०२१ अङ्कः द्वितीयः

# प्राचीसुधा
# PRACI SUDHA

**A NATIONAL PEER REVIEWED HALF-YEARLY SANSKRIT RESEARCH JOURNAL**

"प्राचीसुधा" सुललिता बहुशास्त्रतत्त्व-
पूर्णा जगज्जनहिताऽखिललोकमान्या ।
आध्यात्मिकीं सुखकथां परिवेषयन्ती
संराजतां निरभिमानबुधेषु नित्यम् ।।

सम्पादकः सञ्चालकश्च
प्रो. विश्वनाथस्वाईँ

सहसम्पादकाः
डॉ.युधिष्ठिरसाहुः
डॉ. विघ्नेश्वरमिश्रः

पुरुषोत्तमप्राच्यविद्याशोधप्रतिष्ठानम्, पुरी, ओडिशा
PURUSOTTAM RESEARCH ACADEMY OF INDOLOGY
SARVODAYA NAGAR, PURI - 752002, ODISHA
Website : www.pracisudha.in

IMPACT FACTOR : 3.105 PRACI SUDHA ISSN 2249 - 2313
A NATIONAL PEER REVIEWED HALF-YEARLY SANSKRIT RESEARCH JOURNAL

पुरुषोत्तमप्राच्यविद्याशोधप्रतिष्ठानम्
Purusottam Research Academy of Indology
Sarvodaya Nagar, Puri - 752002 (Odisha)
E.mail: Pracisudha2013@gmail.com



## सम्पादकीयम्

ॐ "य आत्मदा बलदा यस्य विश्व उपासते प्रशिषं यस्य देवा:" इत्यादि तपोज्ञानमूर्त्ति: हिरण्यगर्भ: प्राजापत्य: (ऋक्. १०.१२१.२)।

इह खलु दृश्यते त्रिविधं ब्रह्म । एतेषु रूपेषु एका वैचित्र्यमयी ह्यग्नेयी। इयं किल भोग्यरूपा । द्वितीयत: ब्रह्मरूपभूता: भोक्तार: जीवात्मान: । "असंख्या मूर्त्तयस्तस्य निष्पतन्ति शरीरत: । उच्चावचानि भूतानि सततं चेष्टयन्ति या: ।।" इति चात्र स्मृतिप्रशस्ति:। असाधारणं तु पुरुषोत्तमपदवाच्यं परं ब्रह्म । निर्गुणं निराकारं निरवयवं निरञ्जनं ह्येतद् ब्रह्म प्रेरयितृत्वेन परं प्रसिद्धम् । भक्तानुकम्पया एतदपि यथाकालं सगुणं साकारं सावयवं चेत्यादि परिकल्पितम् । सर्वशक्ति ब्रह्म व्रजपुरवनितानां कामदेवं वर्द्धयन् विराजते। निमित्तोपादानकारणस्यास्य विशाललोललोचनस्य भवमोचनस्य भासाप्रेरणाहेतो: अत्र सर्वेषां प्रकाश: यथाकर्म यथाश्रुतमित्याधारेण । अत्र आविर्भूता: अर्वाक्स्रोतस: जीवात्मान: विशेषत: मनुष्यरूपधरा: अपि सौभाग्यप्राप्ति निमित्तम् अधिकारिण: "इदं वपुर्निवचनम्" इति श्रुते: । मनुष्याणां कृते उर्ध्वगतिनिमित्तं प्रवृत्तं निवृत्तं चेति द्विविधं कर्म उपदिष्टम् । इह सुखाभ्युदयिकं कर्म प्रवृत्तं कथ्यते । निवृत्तं तु नै:श्रेयसिकम् । उभयं तु वैदिके कर्मयोगे अन्तर्भवति । एषणात्रयोपस्थितावपि योगिन: समत्वभावसम्पन्ना: सन्त: सत्त्वज्ञानमात्रासु एव निमग्ना: । एतादृश्यामवस्थायाम् एते नितरां सदा शास्त्रचर्च्चापरायणा: विराजमाना: । शब्दब्रह्मनिष्णातानां प्रेक्षावतामेतेषां मनोनि:सृता: रचना: परब्रह्मोपासनानुकूला:। अत्र सौरभपरिपूर्णा: रचना: यथा - **षोडशकल:, विद्यारण्यानुसारं ब्रह्मणोऽन्तर्यामिस्वरूपविचार:, एकशेषवृत्तिविमर्श:** चेत्यादय: विराजन्ते । एता: पुरुषोत्तमप्राच्यविद्या-शोधप्रतिष्ठानस्य परिवीक्षितायां षाण्मासिकिसंस्कृतशोधपत्रिकायां **प्राचीसुधा**याम् अधुना रमन्ते इति आनन्दस्य विषय: । **प्राचीसुधा**संस्कृतशोधपत्रिकाया: अयं षड्विंशतितमो बिन्दु: (वर्षम्-१३, अङ्क:-२, अक्टूवर-२०२०- मार्च्च-२०२१) । प्रकाशनमिदं सर्वजनहृद्यं भवेदिति निवेदनम्।

विदुषां वशंवद:
**विश्वनाथस्वाईं**
**सम्पादक: सञ्चालकश्च, प्राचीसुधा**
**तथा च महासचिव:,**
**पुरुषोत्तमप्राच्यविद्याशोधप्रतिष्ठानम्, पुरी, ओडिशा**

**श्रीजगन्नाथपुरी**
३१.०३.२०२१

IMPACT FACTOR : 3.105 PRACI SUDHA ISSN 2249 - 2313
A NATIONAL PEER REVIEWED HALF-YEARLY SANSKRIT RESEARCH JOURNAL
त्रयोदशवर्षम् प्रथमसंख्या

# विषयसूची

# षोडशकल:

**प्रो.सुरेन्द्रमोहनमिश्र:**

सत्काव्यप्रणययन्नप्रय प्रप्रयतर प्रेष्ठ प्रमातर्व्रजे
राधामाधवयोजरयत्यहरहो रासे रमन्ते रसा:।
तेष्टौ वा नव वा दश प्रथितसोल्लासाभिलापालय:
हृद्यं भमत्र मुदा मरन्दलसितं पुष्पं पपु: सन्ततम् ।।१।।
ग्राह्या सद्रसभास्वरानुविनास्ता ग्राहिका गोपिका:
सर्वं तरमुरलीध्वयनप्रसृमरप्राणप्रसन्नं वपु:।
नो चेतुं सहजं मम प्रशमितान्धालोकभेदो व्रजे
किं नो सुन्दरमत्र हृद्यमनघं तत्कद्रजश्चन्दनम् ।।२।।
गङ्गा यस्य सखे नखात्सुनिरगाद्हेमाद्रिजावल्लभे
अलङ्कार: प्रवहत्कलत्कलकलन्नादं तनोत्युर्म्मिजम् ।
सोऽयं गौपपुर्वधूशतशतप्राणैषणातोषणात्
कालिन्दीकमलाविलासवलितो नादोऽवशोऽहं विद: ।।३।।
तत्पञ्चपञ्चननिधेरसिताचलस्थ -
शङ्खान्तरस्थकमलालयवेदिकाग्ने: ।
लेलायमानविशदोज्ज्वलकान्तिकान्ता
भूयासुराशु भवभारहरा वधूट्य: ।।४।।
कृष्णे कृष्णे हि कृष्णे प्रजपति जनुष: सर्वथा सर्वदा मे
योसौ तोषो मनोवाक्कृतिनिचयमये क्वास्तु सोऽन्यत्र भूरि ।
भासन्तां भूय एते जनिमृतिसमयं ज्ञातवन्तोऽप्यलज्जा:
कौबेरा वारयोषापुरहृतवपुषो किं ततो न: स्मृतैस्तै: ।।५।।
हंहो कदाचिद्रतिरागभूषणे
काव्यालिरासन्नयुवत्वदीपिते ।
मुच्छोडशांशो व वने सुयामुने
राधारसे षोडषसत्कला: सुखा: ।।६।।

—०—

*लब्धावसर: आचार्य:, कुरुक्षेत्रविश्वविद्यालय:,*
*निवाससङ्केत: - श्रीब्रह्मविद्योल्लासिनी वैदिकग्रामप्रतिष्ठानम्, वणहरा-विष्णुपुरम्, केन्द्रापडा, ओडिशा ।*

# विद्यारण्यानुसारं ब्रह्मणोऽन्तर्यामिस्वरूपविचार:

डॉ.दयानन्दपाणिग्राही

कूटशब्दा: - पञ्चदशी, विद्यारण्य:, अन्तर्यामी, अन्तर्यामिस्वरूपं, ब्रह्म।

विशालेऽस्मिन् दर्शनसाम्राज्ये अद्वैतवाद: विभिन्नप्रमाणेन विभिन्नोपायेन परिपुष्टो भवति। तत्र परिपोषकेषु ग्रन्थेषु आचार्यमहामुनिविद्यारण्यविरचितग्रन्थ: ''पञ्चदशी'' अन्यतम:। वेदान्तान्तर्गतेषु प्रकरणग्रन्थेषु ''पञ्चदशी''ति ग्रन्थ: प्राज्ञै: स्वीकृत: अद्वितीय: प्रामाणिकग्रन्थश्च वर्तते। अत्र सरलभाषया प्रामाणिकयुक्त्या शास्त्रीयदृष्टान्तमाध्यमेन च दुर्वोधतत्त्वस्य सम्यक्तया विचार: कृतो वर्तते। वेदान्तदर्शनस्य गुरुत्वपूर्णमूलतत्त्वानि अत्र विशद्रूपेण ग्रथितानि सन्ति। अत्र इदृश्या सरलभाषयातिगम्भीरतत्त्वान्यालोचितानि सन्ति यत्र सर्वेषां साधारणजनानामपि प्रवेशस्सुकरस्स्यात्। अद्वैतशास्त्रसिद्धान्तान्मनसि निधाय ग्रन्थकार: अस्मिन् ग्रन्थे स्वविद्वत्पराकाष्ठां प्रदर्शयति । सर्वसाकल्येन ग्रन्थोऽयं सम्प्लुतोदकमिव सर्वजनादृतो भवतीत्यत्र नास्ति संशय: । अयं ग्रन्थ: पञ्चदशाध्यायात्मक:, अत: अस्य नाम पञ्चदशी इति। अस्मिन् ग्रन्थे प्रत्येकमध्याये एकैकस्य प्रकरणस्योपरि आलोचना भवति। तत्र क्रमानुसारं प्रकरणानां नामानि यथा - तत्त्वविवेकप्रकरणं, पञ्चभूतविवेकप्रकरणं, पञ्चकोशविवेकप्रकरणं, द्वैतविवेकप्रकरणं, महावाक्यविवेकप्रकरणं, चित्रदीपप्रकरणं, तृप्तिदीपप्रकरणं, कूटस्थदीपप्रकरणं, ध्यानदीपप्रकरणं, नाटकदीपप्रकरणं, ब्रह्मानन्देयोगानन्दप्रकरणं, ब्रह्मानन्दे आत्मानन्दप्रकरणं, ब्रह्मानन्दे अद्वैतानन्दप्रकरणं, ब्रह्मानन्दे विद्यानन्दप्रकरणं, ब्रह्मानन्दे विषयानन्दप्रकरणं इति ।

तत्र प्रथमप्रकरणपञ्चके आत्मानात्मवस्तुविषयकविचारालोचना भवति । प्रथमप्रकरणपञ्चकं विवेकप्रकरणमिति कथ्यते। द्वितीयप्रकरणपञ्चके शुद्धचैतन्यस्वरूपात्मविषयिणी आलोचना भवति । अत: द्वितीयपञ्चकस्य नाम दीपपञ्चकमिति । तत्र तृतीयप्रकरणपञ्चके आत्मानन्दस्वरूपं प्रतिपादितमस्ति, अत: अस्य पञ्चकस्य नाम आनन्दपञ्चकमिति। एवं प्रकारेण पञ्चदशीग्रन्थे वेदान्ततत्त्वानि सरलरीत्या प्रतिपादितानि सन्ति । अत: पञ्चदशीति ग्रन्थ: ग्रन्थकारस्य विद्यारण्यमहाभागस्य

अमरकीर्त्तिराजीति नास्ति संशय:।

प्रकरणप्रतिपाद्यविषयेषु द्वितीयप्रकरणे नाम दीपप्रकरणे चित्रपटदृष्टान्तेन परमात्मन: वर्णनं नितरां पिपठिषूणामानन्दमधिगमाय भवतीति।

तत्रारम्भे उक्तं यथा- यथा चित्रपटे दृष्टमवस्थानां चतुष्टयम्।

परमात्मनि विज्ञेयं तथाऽवस्थाचतुष्टयम्।।
यथा धौतो घट्टितश्च लाञ्छितो रञ्जित: पट:।
चिदन्तर्यामी सूत्रात्मा विराट् चात्मा तथेर्यते।।[१] इति।

तत्र पटे चतस्त्र: अवस्था: यथा - धौत:,घट्टित:, लाञ्छित:, रञ्जितश्चेति भवन्ति, एवं चित्, अन्तर्यामी, सूत्रात्मा, विराट् चेति चतस्त्र: अवस्था: परमात्मनि अवगन्तव्या:। आसु अवस्थासु मध्ये स्वत: द्रव्यान्तसम्बन्धं विना शुभ्र: पट: धौत: इत्युच्यते। अन्नेन मण्डेन लिप्त: पट: घट्टित: इति कथ्यते। मषीमयै: आकारै: पूरित: पट: लाञ्छित: इति भण्यते। यथायोग्यं वर्णै: पूरित: पट: रञ्जित: इति गीयते। एवं पटस्य अवस्थाचतुष्टयं यथा तथैव परमात्मनि अपि विज्ञेयम्। तत्र परमात्मा यदा मायारहित: मायाकार्यरहितश्च भवति तदा 'चित्' इत्युच्यते। मायासम्बन्धात् 'अन्तर्यामी'ति व्यपदिश्यते। अपञ्चीकृतपञ्चभूताभ्यां कार्यस्वरूपसमष्टिसूक्ष्मशरीरयोगात् 'सूत्रात्मा' इत्याहूयते। पञ्चीकृतपञ्चभूतानां कार्यस्वरूपस्थूलसृष्टियोगात् समष्टिस्थूलशरीररूपस्योपाधे: संयोगात् 'विराट्' इति कथ्यते।[२] एवमयं परमात्मा य: चतुर्धाभागं प्राप्नोति स्वोपाधिवशात् स वस्तुत: स्थूलसूक्ष्मकारणशरीराद्व्यतिरिक्त: जाग्रत्स्वप्नसुषुप्त्याद्यवस्थात्रयसाक्षी अन्न-प्राण-मन-विज्ञान-आनन्दमयादिपञ्चकोशातीत: सच्चिदानन्दस्वरूप: संस्तिष्ठतीति।[३]

उपाधिस्तु तत्र अचिन्त्यरचनाएक्तियुक्तं यद् बीजं सा माया एव। मायोपाधि एव स्वाभासेन जीवेशौ निर्माति। अत एवोक्तमपि -

मायाख्याया: कामधेनौ वत्सौ जीवेश्वरावुभौ।
यथेच्छं पिवतां द्वैतं तत्त्वं त्वद्वैतमेव हि।।[४]इति।

तत्र 'सुषुप्तिस्थान एकीभूत: प्रज्ञानघन एव' इत्यादौ सुषुप्तिकालीन आनन्दमयकोश एव सर्वेश्वर: परमेश्वर:, ईश्वर:,सर्वज्ञ:,अन्तर्यामी, भूताधिपति:, प्रज्ञानघन:, जगत्कारणं चोच्यते। एवं विज्ञानमयादिकोशेषु पृथिव्यादिभूतेषु तिष्ठन् तान् कोशान् भूतानि च अन्त: नियमयति प्रेरयति। तेन सर्वज्ञ एव अन्तर्यामीति पदेन उच्यते। उक्तं हि-

विज्ञानमयमुख्येषु कोशेष्वन्यत्र चैव हि ।

अन्तस्तिष्ठन्यमयति तेनान्तर्यामितां व्रजेत्।।[५] इति।

बृहदारण्यकोपनिषदि अन्तर्यामिब्राह्मणे श्रुतिः 'यो विज्ञाने तिष्ठन्'[६] इत्युद्घोषयति यत् विज्ञानमयकोशरूपबुद्धौ तिष्ठन् स अनतर्यामी बुद्ध्या अनवलोकितः बुद्धिशरीरः सन् एवं बुद्धिं नियमयति प्रेरयतीति।[७] यथा तन्तुः उपादानरूपेण पटे सर्वत्र विद्यते तथा अयम् अन्तर्यामी सर्वेषामुपादानकारणं भवति। अतः सर्वेषु भूतेषु कोशेषु च वर्तते इति घोषितं ''यः सर्वेषु भूतेषु तिष्ठन्'' [८] इति।

अन्तर्यामी यदि सर्वत्र उपस्थितः अवस्थितः अस्ति, तर्हि सर्वत्र कथं नोपलभ्यते ? अस्योत्तरं यत्- पटात् आन्तरः तन्तुः, तन्तोः आन्तरः सूक्ष्मतन्तुः। एवं यत्र आन्तरत्वस्य समाप्तिः भवेत् तत्र अयमीश्वरः अनुमातव्यः, अन्तरत्वात् । सः सर्वत्र नोपलभ्यते इति अनुमानगम्यः भावः। अत्रेदमनुमानम्। आन्तरत्वस्य तारतम्यं क्वचित् विश्रान्तं भवेत्, यतः तत्तारतम्यमस्ति यथा अणुत्वस्य तारतम्यममस्ति। तद्यथा -

पटादप्यान्तरस्तन्तुस्ततोरप्यंशुरान्तरः।
आन्तरत्वस्य विश्रान्तिर्यत्रासावनुमीयताम्।।[९] इति।

आन्तरत्वेऽपि सूक्ष्मतन्तुवत् अन्तर्यामिनो दर्शनं कथं न भवति ? उत्तरं तु यत्- तेषां बाह्यत्वं नास्ति आन्तरत्वमेवास्ति, अतः नोपलभ्यते। आन्तरत्वस्य द्वित्रासु अवस्थासु कक्षासु वा दर्शनं घटपटादिषु बाह्यपदार्थेषु दृश्यते। परन्तु आन्तर्यामिनः बाह्यत्वं नास्ति। आन्तरमेवास्ति,अतः अयं सर्वान्तरः दृश्यते। अस्य सद्भावस्य निर्णयः युक्त्या श्रुत्या कर्त्तव्यः। तत्र किमप्यचेतनं चेतनाधिष्ठानं विना न प्रवर्तते इति युक्त्या अस्य सिद्धिः। 'यो विज्ञाने तिष्ठन्' [१०] इति श्रुत्याऽपि अस्य सिद्धिः भवति। यस्य 'सर्वाणि भूतानि शरीरम्' [११] इत्याद्यापि। यथा तन्तूनां पटरूपेण परिवर्तनात् तस्य पटस्य शरीरं तन्तुजालं भवति , तथैव अन्तर्यामी। यतः सर्वजगतः रूपम्, अतः अन्तर्यामिनः शरीरं सर्वं जगद्भवति।

तथाह- पटरूपेण संस्थानात्पटस्तन्तोर्वपुर्यथा।
सर्वरूपेण संस्थानात्सर्वमस्य वपुस्तथा।।[१२] इति।

एवम् अन्तर्यामिप्रतिपादिकां श्रुतिमुपन्यस्य स्मृतिरूपं गीतावचनमुपन्यस्तम्। यथा-

ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति।
भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया।।[१३] इति।

अयमर्थः- हे अर्जुन! ईश्वरः सर्वप्राणिनां हृदयदेशे वर्तते। स च यन्त्रारूढं सर्वभूतवर्गं

स्वमायया भ्रामयति इति। अत्र सर्वभूतानि इति पदं विज्ञानमयकोशरूपजीव: इति अर्थस्य प्रकाशकम्। ते च विज्ञानमयकोशरूपजीवा: हृदयपुण्डरीके स्थिता:। यत: तेषामुपादानकारणमीश्वर: हृदि विकारं प्राप्नोति। तत्र देहादिपञ्जरम् एव यन्त्रम्। तत्राभिमानभाव: आरोह:। शुभाशुभेषु कर्मसु प्रवृत्ति: भ्रमणम्। तदेवं यन्त्रपदं देहादिपञ्जरस्य वाचकम्, अभिमानभाव: तदारोहपदस्य, शुभाशुभकर्मप्रवृत्तिभ्रमणस्येति।[१४]

ईश्वर: स्वशक्त्या प्रभावित: विज्ञानमयजीवरूप: सन् तस्मिन् विज्ञानमयप्रवृत्तिरूपेण विकृत: भवति। स एव ईश्वर: स्वशक्त्या स्वयमेव विकृतिं प्राप्नोति। तदेव मायाया: भ्रमणमुच्यते।

'य: पृथिव्यां तिष्ठन् पृथिवीमन्तरो यमयति' [१५] इत्यादिश्रुतौ अयमेव भ्रमणरूप: अर्थ: कथित:। अयं न्याय: पृथिव्यादिषु स्वबुद्ध्या योजनीय:। सर्वा: प्रवृत्तय: ईश्वराधीना: इत्यत्र शास्त्रान्तरं प्रमाणमस्ति। तद्यथा-

जानामि धर्मं न च मे प्रवृत्ति: जानाम्यधर्मं न च मे निवृत्ति:।
केनापि देवेन हृदि स्थितेन यथा नियुक्तोऽस्मि तथा करोमि।[१६]

इत्यादौ हृदये वर्तमान: देव: यथा प्रेरयति तथा मनुष्य: करोति इत्यत्र सर्वासां प्रवृत्तीनां प्रेरक: अन्तर्यामीति शम्।

---

**सन्दर्भा:**

०१.पञ्चदशी,चित्रदीपप्रकरणम्,श्लोक–१-२।
०२.तत्रैव, श्लोक-३-४।
०३.तत्त्वबोध:,श्लोक:-१४।
०४.पञ्चदशी,चित्रदीपप्रकरणम्,श्लोक:२३६।
०५.तत्रैव,श्लोक: -१६३।
०६.बृहदारण्यकोपनिषद्- ३.७.२२।
०७.पञ्चदशी,चित्रदीपप्रकरणम्,श्लोक:१६४।
०८.बृहदारण्यकोपनिषद्-३.७.१५।
०९.पञ्चदशी,चित्रदीपप्रकरणम्,श्लोक:१६६।
१०.बृहदारण्यकोपनिषद्-३-७-२२।

११.तत्रैव,-३-७-१५।

१२.पञ्चदशी,चित्रदीपप्रकरणम्,श्लोक:१६८।

१३.श्रीमद्भगवद्गीता.श्लोक:८ -५१।

१४.पञ्चदशी,चित्रदीपप्रकरणम्,श्लोक:१७१-१७३।

१५.बृहदारण्यकोपनिषद् -३-७-३।

१६.पञ्चदशी,चित्रदीपप्रकरणम्,श्लोक:१७६ ।

**सहायकग्रन्थसूची -**


०१. श्रीविद्यारण्यमुनि:।(१९९६)।पञ्चदशी,।दिल्ली : चौखम्बा संस्कृत प्रतिष्ठान।

०२. श्रीशङ्कराचार्य:।(स.२०५८)।बृहदारण्यकोपनिषद्,शाङ्करभाष्योपेता, हिन्दी अनुवाद सहित। गोयन्दका, श्रीहरिकृष्णदास, अनुवादक। गोरखपुर : गीताप्रेस्।

०३. श्रीशङ्कराचार्य:।(१९८८)। प्रकरणाष्टकम्, श्रीमद्विद्यारण्यादिटीकोपेतम्, सम्पा.एस्,एस्,शास्त्री। आनन्दाश्रममुद्रणालय:।

०४. श्रीशङ्कराचार्य:। (स.२०६३)। श्रीमद्भगवद्गीताशाङ्करभाष्य, हिन्दी अनुवाद सहित। गोयन्दका, श्रीहरिकृष्णदास, अनुवादक। गोरखपुर : गीताप्रेस्।


—०—


*सहायकाचार्य:*

*अद्वैतवेदान्तविभाग:,*

*कलियाचकविक्रमकिशोर-आदर्शसंस्कृतमहाविद्यालय:,*

*हेरिया,पूर्वमेदिनीपुरम्,पश्चिमवङ्गा: ।*

# संस्कृतसाहित्ये नारी

डॉ. सुमन्तकुमारदासः

भारतीयसंस्कृतौ नारीणां स्थानं वसुन्धरेन सवात्कर्षण वर्त्तते । इयं नारी नृ + अञ् + ङीप् प्रत्ययेन सिद्ध्यति । अस्य शब्दस्य पर्यायशब्दाः वहवः शन्त्यत्ममरकोषाज्ज्ञायते । यथा -

स्त्रीयोषिदबला योषा नारी सीनन्तिनी वधुः ।
प्रतीपदर्शिनी वामा वनिता गहिला तथा ।।

एतेषु पर्यायवाचिशब्देषु महिलेति एकः शब्दो वर्त्तते अस्यार्थः भवति महति मह्यते वा मह् पूजायमिन्यनेन इलच् प्रत्ययेन महिलाशब्दः निष्पद्यते । अतः सा सर्वदा पूजनीया वन्दनीया वा सर्वैः । पुरुषेण सह अस्याः सम्बन्धः शब्दार्थौ इवेति कालिदास पचनाजज्ञायते -

वागर्थाविवसंपृक्तौ वागर्थप्रतिपत्तये ।
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ ।।

इयं शक्तिस्वरूपिणी नारी दुर्गा, सरस्वती, लक्ष्मीत्यादि नाम्ना पूज्यतेऽस्मिन् संसारे श्रद्धया भक्त्या च । अनेन संसारस्य कल्याणं भवति । श्रीदुर्गासप्तसत्यां श्रीमहाकाली, महालक्ष्मी, महासरस्वती, श्रीदुर्गेतिनाम्ना नारीशक्तिः विविधरुपेण वर्ण्यते । मनुस्मृतावपि कथ्यते-

"स्त्रियः श्रियश्च गेहेषु न विशेशेऽस्ति कश्चन" असीत् स्त्री शतीश्चेति द्वयोर्मध्ये नास्ति कश्चन भेदः । स्व स्व विवाहार्थं स्वयम्बरसभायां पतिवरणं स्वेच्छया कृतवन्तः ।

**पत्नीरूपेण नारी -**

अस्माक संस्कृतौ गृहस्थाश्रमे पत्न्याः स्थानं सर्वोपरि वर्त्तते । सा पतिपरायणा सती संपूर्ण परिवारं संचालयति । सर्वत्र साहित्य दृश्यते पुरुषस्य सहधर्मिणीरूपेण समस्तकार्यं सुचारुरूपेण सम्पादयति । वैदिककाले विश्वामित्र, वशिष्ठ, भरद्वाज प्रभृतयः यथा कवयः मन्त्रद्रष्टारः आस न तथैव श्रद्धाकामायनी, अपला, घोषा, सरस्वती, सूर्या, सेर्पराज्ञी, सावित्री,

अदिति लोपामुद्रा-गार्गी दक्षायणी-इन्द्राणी प्रभृतयो भवन्ति । रामायणेऽपि आदर्शपतिव्रता पत्नीरूपेण रामेण सहसीता सर्वं सफलतया सम्पादयति इति तु निर्विवादनम् । महाभारतानुसारं परिवारे पत्नी, सम्मनीया, पूजनीया, भाग्यवती, पूण्यशीला गृहस्य लक्ष्मी स्वरूपा च । गृहस्य शोभा भवति पत्नी । यस्मिन् सद्मनि पत्नी नास्ति तद् गृहं गृहं न भवतीत्युच्यते-

"न गृहं गअहमित्याहु गृहिणी गृहमुच्यते"

स्कन्दपूराणोऽपियुक्तं स्त्री कार्यकुशलता, पतिव्रता, पुत्रवती मधुरभाषिणि प्रभृति गुणै: साक्षात् लक्ष्मीरिव शोभते-

दक्षा पतिव्रता पुत्री प्रियवाक्यवंशवदा ।
गुणैरमीभि: संयुक्ता सा श्री स्त्रीरूपधारिणी ।।

(स्कन्दपुराणे - ३६/८७)

श्रीमद्भागवतेऽपि मनुपत्नी पुत्रेष्टियज्ञातावरे होतु: कन्याप्रार्थना कृता । यथा-

तत्र श्रद्धा मनोहारी होतारं समचायत ।
दुहित्र्यर्थमुपागम्य प्रणिपत्य पतिव्रता ।।

(श्रीमद्भागवते - ९/१/१४)

तथैव महाभारते कन्याया: महत्त्वं प्रतिपाद्य स्वीकथियते व्यासेन यत् कान्यायां लक्ष्मी निवसतीति ।

संस्कृतसाहित्ये आर्यसंस्कृते: प्रतिनिधिस्वरूप: महाकविकालिदास: स्वकृतिभि: संस्कृतवाङ्मये स्वतन्त्रस्थानमधिकरोति सहृदयानां हृदयेऽपि । तेन कुमारसंभवमहाकाव्ये पार्वत्या: चित्रणमादर्शकन्यारूपेण विहितम् । आर्यसंस्कृतावभीष्टवस्तुप्राप्तये तपस्या एव श्रेष्ठसाधनं भवति । अत: सा मृत्युञ्जयं रूपेण लब्धुं मुनिमहर्षिवत् कठोरतपस्यामाचरिवती।

यथा कुमारसंभवे – इयेष सा कर्त्तुमबन्ध्यरूपतां
समाधिमास्थाय तपोभिरात्मव:
उवाण्यते वा कथमन्यथाद्वयं
तथाविधं प्रेम पतिश्च तादृश:

अन्ततोगत्वा परिशेषे पार्वत्यादुपरि प्रसन्न: भूत्वा आविर्वभूव । येन तस्या अभिलाष: पूर्णतामति स्म । एवं तत्कालिकसमाजे नारीणां स्वतन्त्रतासीदिति तत्कृतिष्ववलोक्यते यथा - अभिज्ञानशाकुन्तले शकुन्तला, कुमारसंभव पार्वती, तथा रघुवंशे इन्दुमती ।

भिप्रायो यत् सृष्टिः शक्त्या संचाल्यते । सा शक्तिः भवति नारीशक्तिः । धर्मशास्त्रादौ नारीणां महत्त्वमनेकशः प्रतिपादितम् । यथा मनुस्मृतौ मनुना प्रतिपाद्यते-

यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः

यत्रैतास्तु न पूज्यन्ते सर्वास्तत्राफलाः क्रियाः ।। (मनु. ३/५६)

उत्कृष्ट सभ्यतानिर्माणे नारीणां भूमिका सुमहतीति अनस्वीकार्या । मुख्यतः नारी त्रिधा इति संस्कृतसाहित्येषु दरीदृश्यते कन्यारूपेण भार्यारूपेण, जननीरूपेण । यतः साहित्यं समाजस्य एव दर्पणः । व्यास-वाल्मीकि-कालिदास-भवभूति प्रभृतिभिः स्व स्व कृतिषु नारीणां महत्त्वं यथाकालं प्रतिपादितम् ।

**१. काव्यारूपेण नारी -**

कन्या साक्षात् लक्ष्मीस्वरूपेति जनश्रुतिः प्रमाणम् । परिवारे कन्याजन्मानन्तरं प्रायशः जनाः वदन्ति यत् लक्ष्मी समायातेति शुभङ्करी । यद्यपि शब्दानुशासने "शोकंकरी कन्या" इति दृश्यते कन्यायाः विशेषणपदं शोकंकरोति प्रदीयते । (शब्दानुशासन मृ. ५.१.१०३) तथापि वैदिकसाहित्ये कन्या संप्रार्थ्यत इति दृश्यते .... । अथ य इच्छेत् दुहिता मे पण्डिता जायते सर्वज्ञातुरियादित् वृहदारण्यकोपनिषद् - ६/४/१७ ।

जीवनस्य लक्ष्यं धर्मार्थकाममोक्षादिचतुवर्गफलप्राप्तिरेव तत्र धर्मार्थकामेषु स्त्रीयः भूमिकापरिहार्या । यथा राामायणे रामः यज्ञानुष्ठानसमये सीताया अभावे स्वर्णमयीसीताप्रतिमां संस्थाप्य धर्मार्जनं कृतवान् यज्ञं संपादितवान् । महाकवि कालिदासः अभिज्ञानशाकुन्तल सप्तमाङ्क निगदति यत् पत्नीत्यागः महत् पापं भवति कस्तस्य धर्मदारपरित्यागिनो नाम संकीर्त्तयितुं चिन्तयिष्यति ? (डा.कपिलदेवदेवी संपादित अभिज्ञानशाकुन्तलम् - ७ अङ्क १-४२१) दाम्पत्यजीवनस्य मार्मिकवर्णनं यथा भवभूतिना कृतं न तथा अन्यत्र । प्रेम दाम्पत्यजीवनं मधुमयं विदधाति । अस्य प्रेमतत्त्वस्य शिक्षा गृहस्थजीवने परमावश्यकी। अस्य सुन्दरवर्णनं भवभूतिना एवं कृतम् -

अद्वैतं सुखदुःखयोरनुगुणं सर्वास्ववस्थासु यत्

विश्राम हृदयस्य यत्र जरसा यस्मिन्नहार्या रसः ।

कालेनावरणात्ययात् परिणते यत्स्नेहसारे स्थितं

भद्रं प्रेम सुमानुषस्य कथमप्येकं हि तत्प्राप्यते ।।

(उत्तररामचरितम् -१/३९)

अस्य प्रेम्णा: प्रतिमूर्त्ति भवति पत्नी वा नारी एतत् प्रेमतत्त्वं केवलं सहृदयहृदयमेव ज्ञातुं समर्थम् - उक्तं च तेन तत्र - हृदयं त्वेव जानाति प्रीतियोगं परस्परं । (उ.रा,च. ६/३२)

**जननीरूपेण नारी -**

भारतीयसंस्कृतौ स्त्री ज्ञानुक्तं जननीत्यनलभ्यते । तस्या: सम्मान: क्रियते । उक्तञ्च शास्त्रं मातृवत् परदारेषु इति । तैत्तिरीयोपनिषदि माता साक्षात् देवता इति उपदिशति। यथा - मातृदेवो भव । पुनश्च शास्त्रेषु एतदपि कथ्यते -

मातृतेऽन्य न देव: तस्मात् पूज्या सदा सुत:
गर्भधारणपोषणाद्धि ततो माता गतीपसी ।।

अत: पुरुषापेक्षया मातु: स्थानं सर्वोपरि वर्त्तते । संपूर्णसंसारस्य सृष्टि: विकाश: धारणञ्च मातुरुपति निर्भरं करोति । यदि माता शिक्षिता भवति तहि तस्य: सन्ताना: अपि शिक्षिता भविष्यन्ति । राष्ट्रहिताय शिक्षिता मति एव अपेक्षते । महाभारते माता श्रेष्ठगुरुरिति कथ्यते ।

नास्ति मातृसमो गुरु: (महाभारत शान्तिपर्व १०८/१७) वैदिकसाहित्ये लौकिकसाहित्येऽपि सर्वत्र मातु: प्रशंसा विहिता । भवभूति: उत्तररामचरिते मुक्तकण्ठेनोद्घोषयति यत् - "जननी जन्मभूमिश्च स्वर्गादपि गरीयसीति" ।

**उपसंहार -**

नारी स्नेहश्रद्धाप्रेम्र: प्रतिमूर्त्ति: । सुखदु:खयो: केन्द्रविन्दु: । तस्या: सुरक्षा अस्माकं रक्षा तस्या: सम्मानोऽस्माकं सम्मान:, तस्यारपमानोऽस्मकमर्पमान एव । उत्कृष्टसमाजसंगठने नारीणां भुक्ता: महत्त्वपूर्णा । स्वयं नारीभिरपि एतदपि चिन्तनीयम् । ताभि:

८. कुमारसंभवम् - ५/२
९. स्कन्दपुराणम् - ३६/८७
१०. काव्यप्रकाश: - १/२
११. ध्वन्यालोक: - १/४
१२. अमिभज्ञानशाकुन्तलम् - ७ अङ्क
१३. उत्तररामचरितम् - ६/३२
१४. महाभारतम् शान्तिपर्व- १०८/१७
१५. मनुस्मृति - ९/८ ।

# नाट्यशास्त्रे संस्कृतभाषाविषयकचिन्तनम्

**पूजा घोष**

नाट्यशास्त्रं पञ्चमवेदरूपेण आचार्यभरतेन संरचितम्। ऋग्वेदात् पाठ्यवस्तु, सामवेदात् गीतम्, यजुर्वेदात् अभिनयम्, अथर्ववेदात् रसान् च संगृह्य रचितमिदं नाट्यशास्त्रम्।

जग्राह पाठ्यमृग्वेदात्सामभ्यो गीतमेव च।
यजुर्वेदादभिनयान् रसानाथर्वणादपि।।[१]

नाट्यशास्त्रे सर्वाणि ज्ञानानि, कर्माणि, शिल्पानि, कला:, विद्या: इति इमे विषया: समाहृता: वरीवर्तन्ते। तद्यथा -

न तज्ज्ञानं न तच्छिल्पं न सा विद्या न सा कला।
नासौ योगो न तत्कर्म नाट्येऽस्मिन् यन्न दृश्यते।।[२]

एतेषु विविधविषयेषु निगुढभाषाचिन्तनमपि प्राप्यते। भाषा भवति नाट्यस्य अविच्छेद्याङ्गम्। नाट्यशास्त्रानुसारेण पाठ्ये गीते अभिनये रसे च सर्वत्रमेव भाषान्तर्भूक्ता भवति। भाषा नाम कण्ठोद्गीर्णा अर्थवती ध्वनिसमष्टि: वैचारिकादानप्रदानपद्धति: सम्भाषणपद्धतिर्वा। आचार्यस्य भरतस्य मतानुसारेण वाक् अर्थात् वाणी भवति तस्य नाट्यस्य शरीरमिति। वाचिकाभिनयप्रसङ्गे तेन उक्तं यत् सर्वाणि शास्त्राणि वाचा एव अनुस्यूतानि। वाणी भवति निखिलस्य विश्वस्य कारणम्। तस्माद्धेतो: विश्वेऽस्मिन् वाण्या: श्रेष्ठतर: किमपि नास्ति।

वाचि यत्नस्तु कर्तव्यो नाट्यस्येयं तनू: स्मृता।
अङ्गनेपथ्यतत्त्वानि वाक्यार्थं व्यञ्जयन्ति हि।।
वाङ्मयानीह शास्त्राणि वाङ्निष्ठानि तथैव च।
तस्माद्वाच: परं नास्ति वाग् हि सर्वस्य कारणम्।।[३]

सम्पूर्णेऽस्मिन् विश्वे जनेषु देशकालजनजातिभेदेन भाषायां वैविध्यता दृश्यते। नाट्येऽपि स्थानकालपात्रचरित्रभेदेन वैचित्र्यं सम्पाद्यते, येन नाट्यस्य भाव: रस: विश्वसनीयता च प्रतिस्थाप्यते। नाट्ये न केवलं एकस्या: भाषाया: कथनभिन्नता प्राप्यते अपि च भिन्नाया: भाषाया: प्रयोगोऽपि दरीदृश्यते। नाट्यशास्त्रे अयं विषय: आलोचित:। नाट्ये प्रयुक्तानां बहुभाषानामुल्लेख: प्राप्यते अत्र। यथा - संस्कृतम्, प्राकृत:, मागधी, आवन्ती, प्राच्या,

शौरसेनी, आर्धमागधी, वाह्लीका, दक्षिणात्या इत्यादयः। एतासु मूलतः संस्कृतभाषायाः साङ्गिकं सुविस्तृतं विवरणं नाट्यशास्त्रे उपलभ्यते।

संस्कृता भाषा एव संस्कृतभाषा। अस्याः संस्कृतभाषायाः अंगानि विविच्य आचार्यभरतेन नाट्यशास्त्रे उक्तम् -

व्यञ्जनानि स्वराश्चैव सन्धयोऽथ विभक्तयः।
नामाख्यातोपसर्गाश्च निपातास्तद्धितास्तथा।।
एतैरङ्गैः समासैश्च नानाधातुसमाश्रयम्।
विज्ञेयं संस्कृतं पाठ्यं, प्रयोगश्च निबोधत।।[४]

अर्थात् संस्कृतभाषायाः नाट्यशास्त्रस्योल्लिखितानि अङ्गानि यथा - व्यञ्जनानि, स्वराः, सन्धिः, विभक्तिः, वचनम्, नाम, आख्यातम्, उपसर्गः, निपाताः, तद्धितः, समासः, धातुश्च इति द्वादशसंख्यकानि। इमानि द्वादशाङ्गानि संस्कृतपाठ्यानि तथा च अस्य प्रयोगस्तु सर्वैरपि ज्ञातव्यो भवति। एतदनन्तरम् एतेषां द्वादशाङ्गानां विषये आचार्यभरतेन संक्षिप्तरूपेण वर्णितम् अस्ति। तद्यथा - स्वराः चतुर्दशसंख्यकाः सन्ति, व्यञ्जनानि त्रयोस्त्रिंसद्। एतेषामुच्चारणस्थानानि भवन्ति अष्टौ, यथा उरः, कण्ठः, शिरः, जिह्वामूलम्, दन्तः, नासिका, ओष्ठः, तालुश्च। पुनः अत्र वर्णानाम् उच्चारणाय प्रयुक्तानां प्रयत्नानां वर्णनमपि दीयते। आचार्यभरतस्य मतानुसारेण एतेषां स्वरसंयुक्तव्यञ्जनानां योगेन विहितात् साख्यातनामपदात् निपातात् उपसर्गात् च काव्यनिबन्धनं जायते। व्यञ्जनवर्गैः नामाख्यातोपसर्गनिपातैः तद्धितसन्धिविभक्तिभिः अधिष्ठितः शब्दः इति कथ्यते।

इत्थं व्याञ्जनयोगै स्वरैश्च साख्यातनामपदविहितैः।
काव्यं निबन्धाश्च स्युर्धातुनिपातोपसर्गैस्तु।।
एभिर्व्यञ्जनवर्गैर्नामाख्यातोपसर्गनिपातैः।
तद्धितसन्धिविभक्तिभिरधिष्टितः शब्द इत्युक्तः।।[५]

एतदनन्तरम् आचार्यभरतेन क्रमेण नामाख्यातादीनि प्रकरणानि विरचितानि। इत्थं नाट्यशास्त्रे संस्कृतभाषायाः द्वादशाङ्गानि यथा - व्यञ्जनानि, स्वराः, सन्धिः, विभक्तिः, वचनम्, नाम, आख्यातम्, उपसर्गः, निपातः, तद्धितः, समासः, नाम, धातुश्च संक्षिप्तरूपेण परन्तु सुस्पष्टतया वर्णितानि।

आचार्यभरतेन वाचिकाभिनयसम्बन्धितस्य पाठ्यस्य प्रकारद्वयमुल्लिखितम् - संस्कृतं प्राकृतञ्च। इदं प्राकृतं संस्कृतात् सर्वतः भिन्ना न कापि भाषा, अपि तु संस्कारगुणविवर्जितम् अर्थात् परिरक्षणरूपयत्नरहितं संस्कृतमेव प्राकृतमित्युच्यते। एतदेव विपर्यस्तं संस्कारगुणवर्जितम्।

विज्ञेयं प्राकृतं पाठ्यं नानावस्थान्तरात्मकम्।।[६]

इतोऽपि नाट्यशास्त्रे भाषाप्रयोगस्य चत्वार: भेदा: दीयन्ते। ते यथा - अतिभाषा, आर्यभाषा, जातिभाषा, योन्यन्तरीभाषा च। एतेषां प्रयोगविधानमपि अत्र प्रदीयते। प्रसङ्गत: उल्लेख्यं यत् संस्कृतं प्राकृतं च भवत: आर्यभाषाया: पाठ्यद्वयम्।

अतिभाषा तु देवानामार्यभाषा तु भुभूजाम्।
संस्कारपाठ्यसंयुक्ता सम्यङ्न्याय्यप्रतिष्ठिता।।
विविधा जातिभाषा च प्रयोगे समुदाहृता।
म्लेच्छशब्दोपचारा च भारतं वर्षमाश्रिता।।
अथ योन्यन्तरो भाषा ग्राम्यारण्यपशूद्भवा।
नानाविहङ्गजा चैव नाट्यधर्मीप्रतिष्ठिता।।
आर्यभाषाश्रयं पाठ्यं द्विविधं समुदाहृतम्।।[७]

अत्र ज्ञायते यत् आर्यभाषा आसीत् राजानां भाषा। आर्यभाषासंस्कारसम्पन्नपाठ्यत्वेन समीचीनन्यायेन च राज्ये प्रतिष्ठिता आसीत्।

एतदनन्तरं नाट्यशास्त्रे रूपकेषु पात्रादीनां कर्मभेदेन भाषाया: विधानं क्रियते। अत्र संस्कृतभाषाया: प्रयोगस्थानं निषेधस्थानञ्च विज्ञायते यथा - धीरोद्धत:, धीरललित:, धीरोदात्त:, धीरप्रशान्त: च नायका: संस्कृतभाषायां संलापयितुं शक्नुवन्ति। तथा च -

धीरोद्धते सललिते धीरोदात्ते तथैव च।
धीरप्रशान्ते च तथा पाठ्यं योज्यं न संस्कृतम्।।[८]

परन्तु विशेषकारणवशात् एतै: प्राकृतभाषा अपि प्रयुज्यते। उदाहरणरूपेण वक्तुं शक्यते गुप्तचरवेशधारिन: राजादय:। बृहन्नलारूपधारणमर्जुनस्य कृते प्राकृतभाषणस्य कारणम्। पुन: विक्रमोऽर्वशीयस्य चतुर्थाङ्के उर्वश्या: वियोगरूपात् असहनीयदु:खात् पीडित: सन् राजा पुरुरवा अपि संस्कृतसम्भाषणं त्यक्तवान्।

इतोऽपि परिव्राट् अर्थात् दण्डीसन्न्यासी बौद्धसन्न्यासी वा चौक्ष: श्रोत्रिय: संस्कृतेन वार्तालापं करोति। अन्य: य: शिष्टो भवति शास्त्रानुसारं व्यवस्थितञ्च भवति सोऽपि संस्कृतसम्भाषणं कर्तुं शक्नोति।

परिव्राण्मुनिशाक्येषु चौक्षेषु श्रोत्रियेषु च।
शिष्टा ये चैव लिङ्गस्था संस्कृतं तेषु योजयेत्।।[९]

पुन: नारीषु राज्ञी, गणिका अथवा शिल्पकारिणी अर्थात् कलायां विदग्धा: संस्कृतभाषायां वार्तालापं कर्तुं शक्तवत्य: -

राज्याश्च गणिकायाश्च शिल्पकार्यास्तथैव च।

कलावस्थान्तरकृतं योज्यं पाठ्यं तु संस्कृतम्।।[१०]

अत्रोल्लखनीयं यत् नारीणां कृते नाट्ये मूलत: प्राकृतसंलापस्य निर्देशो दीयते। तासां चरित्रस्य गुरुत्वानुसारेण नाट्याभिप्रियानुसारेण स्थानकालपात्रानुसारेण च व्यतिक्रम: सम्पद्यते।

नाट्यशास्त्रे पुन: केषाञ्चन चरित्राणां कृते संस्कृतसंलाप: निषिद्ध: अस्ति। यथा य: ऐश्वर्यप्रमत्त: भवति अथवा यस्मिन् अध्ययनस्य अभाव: परिलक्ष्यते, य: दारिद्र्येण परिव्याप्त: भवति अथवा य: स्वेच्छाचारी भवति, पुन: य: उच्चश्रेणी भूत्वा अपि अशिक्षित: तिष्ठति इत्येषां कृते नाट्ये संस्कृतसंलापं निषिद्धं भवति तद्यथा -

ऐश्वर्येण प्रमत्तानां दारिद्र्येण प्लुतात्मानाम्।

अनधीतोत्तमानां च संस्कृतं न प्रयोजयेत्।।[११]

एतान् अतिरिच्यापि व्यजलिङ्गप्रविष्टा: अर्थात् केवलं जीविकानिर्वहनाय साधुगोष्ठ्यां प्रविष्टा:, श्रमणा:, तपस्विन: , भिक्षुका, चक्रचरा, तापसोन्मत्ता, बालग्रहेण नीचग्रहेण च आक्रान्ता, स्त्रिय:, नीचजातिया: , नपुंसकजना इत्यादय: संस्कृतसम्भाषणं कर्तुं न शक्नुवन्ति। एतेषां कृते प्राकृतस्य प्रयोग: जायते -

व्याजलिङ्गप्रविष्टानां श्रमणानां तपस्विनाम्।

भिक्षुचक्रचराणां च प्राकृतं संप्रयोजयेत्।।

भागवततापसोन्मत्तबालनीचग्रहोपसृष्टेषु।

स्त्रीनीचजातिषु तथा नपुंसके प्राकृतं योज्यम्।।[१२]

आचार्यभरतस्य नाट्यशास्त्रे देशकालजात्यादिसम्बन्धितं भाषाविषयकं गभीराध्ययनं कृतम्। विविधभाषासु मुख्यत: संस्कृतभाषासम्बद्धयालोचना अत्र सुविस्तृतरूपेण कृता। नाट्यशास्त्रस्य चतुदर्शाध्याये साङ्गिकं संस्कृतभाषालोचनम्, पुन: सप्तदशाध्याये अस्या: विधानञ्च कृतम्। इत्यस्मात् समकालिन: संस्कृतव्याकरणस्य काचित् अवधारणा प्राप्यते। तथा च अनेन सविस्तारवर्णनेन नाट्ये संस्कृतस्य गुरुत्वं प्रतिपाद्यते। पुन: सप्तदशाध्याये भाषाविधानेन न केवलं संस्कृतस्य भाषाप्रयोगनियम: सम्पद्यते अपि तु समाजे अस्या: भाषाया: स्थानं गुरुत्वं प्रभाव: इत्यादयो विषया: परिलक्ष्यन्ते। नाट्ये केवलं चतुर्भि: नायकै: उच्चवर्णीयव्यक्तिभि: महर्षिभि: ज्ञानकलाविदग्धै: विशेषावस्थायां कैश्चन पात्रैश्च संस्कृतभाषाया: प्रयोग: सिद्ध:। इत्यनेन एषा संस्कृतभाषा

उच्चवर्गस्य सुशिक्षितस्य सर्वत्यागीमानवस्य ज्ञानस्य कलाया: शौर्यवीर्यस्य च प्रतीकिरूपेण द्योतिता भवति। अत्र संस्कृतभाषया नाट्ये समाजे च मनुष्यस्य सामाजिकमूल्यं, बौद्धिकमूल्यं शौक्षिकमूल्यं चारित्रिकमूल्यञ्च परिज्ञायते। इत्थं नाट्यशास्त्रे संस्कृतभाषाविषयकचिन्तनं सम्पादितम।

---

**सन्दर्भा:**

१. नाट्यशास्त्रे - १.१७
२. तदेव १.११७
३. तदेव १४.२,३
४. तदेव १४.६,७
५. तदेव १४.२३-२४
६. तदेव १७.२
७. तदेव १७.२७-३१
८. तदेव १७.३२-३३
९. तदेव १७.३८
१०. तदेव १७.३९
११. तदेव १७.३५
१२. तदेव १७.३६-३७

**सन्दर्भग्रन्थसूची -**

१. नाट्यशास्त्रम् (द्वितीयखण्डम्)- साहित्याचार्य: श्री मधुसूदनशास्त्रिणा सम्पादितम्, काशीहिन्दुविश्वविद्यालयस्य संस्कृतसाहित्यानुसन्धानसमित्या प्रकाशितम्, १९७१।।
२. नाट्यशास्त्रम् (द्वितीयखण्डम्)- साहित्याचार्य: श्री मधुसूदनशास्त्रिणा सम्पादितम्, काशीहिन्दुविश्वविद्यालयस्य संस्कृतसाहित्यानुसन्धानसमित्या प्रकाशितम्, १९७४।।
३. नाट्यशास्त्रम् - मनमोहनघोषेन अनुवादितम्, एशियाटिकसोसाइटि, कोलकाता इत्यनेन प्रकाशितम्, १९५१।।
४. नाट्यशास्त्रम् - प्रो.ब्रजमोहनचतुर्वेदिना सम्पादितम्, देहल्या: विद्यानिधिप्रकाशनेन प्रकाशितम्, १९९८।।
५. नाट्यशास्त्रम् - पं.श्रीजगन्नाथशास्त्रिणा सम्पादितम्, हिन्दीव्याखातम्, वाराणस्या: भारतीयविद्याप्रकाशनेन प्रकाशितम्, २०००।।
६. नाट्यशास्त्र का इतिहास - डाँ.पारसनाथद्विवेदिना सम्पादितम्,वाराणस्या: चौखाम्बा - सुरभारती- प्रकाशनेन प्रकाशितम्,२०१२।।

—०—

**विद्यावारिधि (Ph.D.) शोधच्छात्रा, व्याकरणविभाग:,**
**केन्द्रीयसंस्कृतविश्वविद्यालय:, श्रीसदाशिवपरिसर:, पुरी, ओडिशा।**
**मार्गदर्शिक:- प्रो०उमेश**

# योगपुरुष: श्रीजगन्नाथ:

डॉ.नृसिंहनाथगुरु:

'' सर्वं रहस्यं पुरुषोत्तमस्य देवा न जानन्ति कुतो मनुष्य: ।। ''

रहस्यमयपुरुष: श्रीजगन्नाथ: सर्वलोकपालक: । असौ लोकहिताय विविधा लीला रचयन् नानाप्रकारै: गुणविकारै: स्वरूपै: विहरति । तद्यथा-

'' श्रूयतां तत्त्वतो ब्रूहि यतो देशे कृत: पुरा ।
सर्वथा वर्तते लोकहिताय पुरुषोत्तम: ।।
नानागुणविकारैश्च नानारूपविचेष्टितै: ।
नानाभावविलासेन विजहार जगन्मय: ।।''[१] इति।

अरूप: अथ च सर्वरूप: श्रीजगन्नाथ: परमयोगेश्वर: । तस्य पदयुगलं नास्ति, परन्तु गतिशील: सन् संसारं नियन्त्रयति। हस्तयुगलं न विद्यते परन्तु भक्त्या सर्वं स्वीकरोति। चक्षु: अस्ति परन्तु भ्रूलतिका नास्ति, अत: अपलकनयनेन संसारं पश्यति । यतो हि तस्य एकं चक्षु: सूर्य: अपरं च चन्द्र: । कर्ण: नास्ति परन्तु भक्तानां दु:खं शृणोति । श्रुत्वा एव दूरीकरोति। प्रत्येकं पदार्थं स: जानाति परन्तु तं कोऽपि न जानाति। अस्मात् कर्म-ज्ञानयोगादय: परमपुरुषे श्रीजगन्नाथे अन्तर्हिता: भवन्ति । श्रूयते तद्यथा-

''अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षु: स शृणोत्यकर्ण: ।
स वेत्ति वेद्यं न च तस्यास्ति वेत्ता तमाहुरग्र्यं पुरुषं महान्तम् ।।''[२] इति।

**शास्त्रेषु पुरुषतत्त्वविचार: —**

बृहदारण्यकोपनिषदि '' पुरुष: प्रजापतिरूप:''[३] । पूर्वम् औषद् (दहत्) पुरति अग्रे गच्छतीति पुरुष: । असौ सर्वत्र विद्यते । चिदानन्दमय: वर्तते । पुरुषसूक्ते श्रूयते यथा– ''पुरुष एवेदं सर्वं यद्भूतं यच्च भाव्यम् ।
उतामृतत्वस्येशानो यदन्नेनातिरोहति ।।''[४] इति।

इदं वर्तमानं जगत् पुरुष एव । यद्भूतमतीतं, यश्च भाव्यं तदपि पुरुष एव । अत: पुरुषस्य महत्त्ववशात् महायोगपुरुषत्वं सिद्ध्यति। तद्यथा श्रूयते –

''एतावानस्य महिमातो ज्यायांश्च पूरुष: ।
पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि ।।''[५] इति।

वेदान्तदृष्ट्या श्रीजगन्नाथ: ब्रह्मरूपेण, साङ्ख्ययोगदृष्ट्या पुरुषरूपेण परिकल्पित:। तद्यथा महापुरुषविद्यायाम्–

''गुणत्रयमयी माया पूर्वकर्मानुरूपत: ।
गुणेषु जीवान् वध्नाति सत्त्वादिषु महामुने: ।।[६]

तदा सा प्रकृतिः सूक्ष्मा सदसद्रूपिणी भवा ।
सहायं पुरुषं प्राप्य त्रिगुणाचाज्ञया हरेः ।।
स्रष्टुमण्डानि विप्रेन्द्र ! चकार मतिमात्मनः ।
पुरुषस्यैव सान्निध्यात् प्रकृतेर्द्विजसत्तम ।।[७]
सर्ववेदान्ततात्पर्यो विश्वरूपो निरामयः ।
सच्चित्स्वरूपो विश्वात्मा सदा साधुजनप्रियः ।।
परमात्मा परानन्दो ह्यमृतः पुरुषोत्तमः ।
शरण्यः शरणेत्सूनां दीनानां दुःखनाशनः ।।[८] इति।

पूजाप्रकल्पे यथा– "स्थूलं सूक्ष्मं परं चेति त्रिविधं ब्रह्मणो वपुः ।।"
अर्थात् स्थूलवपुर्धरः रुद्रः शङ्कर्षणः बलरामः, सूक्ष्मशक्तिः सुभद्रा, परं स्वयं ब्रह्म योगपुरुषः श्रीजगन्नाथः। एवं ब्रह्म त्रिविधम् । तद्यथा–

'' स्थूलं रुद्रात्मकं साक्षात्सूक्ष्मं शक्त्यात्मिकापरा ।
परंब्रह्मात्मक एषः ब्रह्मणस्त्रिविधं वपुः ।।''[९]

श्रीमद्भगवद्गीतायामपि–

'' ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः ।
ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा ।।''[१०] इति।

आथर्वणीय-पिप्पलादीय-प्रणवतारकोपनिषदि वर्णितमस्ति श्रीजगन्नाथ-बलभद्र-सुभद्रादीनां समष्टिः श्रीपुरुषोत्तमः । तद्यथा- ''तत्स्वपक्षरात्मा जीवचैतन्यो भवति सज्योष्ठः तद्धाम परमेति स्फटिकमिदं शुभ्रमात्मलिङ्गं कलेवरं स तैजसपुरुषकारात्मकमिति । सत् अक्षरात्मा विसर्गात्मकजीवस्य प्रकाशो भवति सा माया सा प्रकृतिः विद्युत् प्रभामिव जीवचैतन्य-ब्रह्मचैतन्योर्मध्ये सा उकारात्मिका संयोगिनी प्रज्ञा इति । ओमिति ब्रह्मचैतन्य स स्वराट् भवति स अनन्त अव्यक्त एव दहराकाशमिव अन्तर्लक्ष्यजलज्योतिनिभकृष्णः स हि शिवः ब्रह्मा स विष्णुः स सर्वमिति हिरण्यगर्भः पुरुषः य एव वेद ।।''ह्ण[११] इति।

नारदपरिव्राजकोपनिषदि नीलाद्रिनाथः पुरुषोत्तमः सर्वेश्वर इति वर्णितमस्ति ।
तद्यथा– ''कविं पुराणं पुरुषोत्तमोत्तमं सर्वेश्वरं सर्वदेवैरुपास्यम् ।
अनादिमध्यान्तमनन्तमव्ययं शिवाच्युतोम्भोरुहगर्भभूधरम् ।।''[१२] इति।

दारुब्रह्म श्रीजगन्नाथः संसारसागराज्जनान् रक्षति अतः सः उडुपसदृशः । तद्यथा– "तस्य प्राण एव शिरः । व्यानो दक्षिणपक्षः । अपान उत्तरपक्षः । आकाश आत्मा । पृथिवी पुच्छं प्रतिष्ठा ।'' इति। [१३] मुण्डकोपनिषदि वर्णितमस्ति सूर्यस्य किरणं, चन्द्रस्य प्रभा, अग्नेः तेजः, विद्युच्च यस्मिन् ब्रह्मणि वर्तन्ते, स एव पूर्णब्रह्म रहस्यमयपुरुषो भवति। तद्यथा–

''न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः ।
तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति ।।'' [१४] इति।

लक्षणमिदं योगपुरुषस्य श्रीजगन्नाथस्य दर्शनेन परिज्ञायते । तस्य सुवर्णतिलकं विद्युत् इव रराजते । एकं नेत्रं सूर्यः अपरं च चन्द्रः वर्तते । मुखमण्डलमग्नितेजोमयमस्ति। तद्यथा– ''अग्निमूर्द्धा चक्षुषी चन्द्रसूर्यौ, दिशः श्रोत्रे वाग्विवृताश्च वेदाः ।
वायुः प्राणो हृदयं विश्वमस्य, पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा।।'' [१५] इति।

पुरुषः सर्वव्यापकः अलिङ्गः निराकारश्चास्ति । अस्य पुरुषस्य विषये पूर्णज्ञानं यदा भवति तदा प्राणी मोक्षपथगामी भवति । तद्यथा–

''अव्यक्तात्तु परः पुरुषो व्यापकोऽलिङ्ग एव च ।
यज्ज्ञात्वा मुच्यते जन्तुरमृतत्वं च गच्छति ।।'' [१६] इति।

एष परमात्मा परमेश्वरः योगिपुरुषः श्रीजगन्नाथ एव अस्ति, यः सर्वत्र गूढरूपेण विराजते । साधकाः तं सूक्ष्मरूपेण भक्त्या च दर्शनं कुर्वन्ति । तद्यथा-

''एष सर्वेषु भूतेषु गूढात्मा न प्रकाशते ।
दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः।।'' [१७] इति।

रामानुजाचार्यस्य मतानुसारं पुरुषोत्तम एव स्वयं ब्रह्म वर्तते । सः दोषवर्जितः कल्याणगुणभूषितः असीमः विश्वव्यापकः चास्ति । तद्यथा- ''ब्रह्मशब्देन च स्वभावतो निरस्तनिखिलदोषोऽनवधिजातिशयासंख्येयकल्याणगुणगुणः पुरुषोत्तमोऽभिधीयते।'' [१८] महाभारतानुसारम्- ''पुरुषोत्तमः सर्वं पूरयति सर्वत्र निवसति ।'' [१९]

स्कन्दपुराणस्य मूर्तितत्त्वानुसारं यदि आलोच्यते तर्हि दारुब्रह्म परमयोगपुरुषः श्रीजगन्नाथः वेदोक्तपुरुषोत्तमः । यतोहि दारुब्रह्मनिर्माणानन्तरं तस्मिन् प्राणप्रतिष्ठा पुरुषसूक्तमन्त्रैः क्रियते । तद्यथा–

''त्रयीप्रसिद्धं यत्सूक्तं पावनं पौरुषं महत् ।
तेन नारायणं भूपः पूजयामास शक्तितः ।।'' [२०] इति।

विष्णुपुराणानुसारं सः पुरुषः श्रीपुरुषोत्तमः । तद्यथा-

'' अंशावतारं पुरुषोत्तमस्य ह्यनादिमध्यान्तमजस्य विष्णोः ।।'' [२१] इति।

श्रीजगन्नाथः हस्तपदचक्षुःकर्णादिरहितः शास्त्रेषु वर्णितः एव योगपुरुषः न कोऽपि अन्यः । तद्यथा श्रूयते -

'' यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादं नित्यम् ।
विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः ।।'' [२२] इति।

परमयोगपुरुषः महाप्रभुः श्रीजगन्नाथः कलौ भक्तेभ्यः सर्वेभ्यः अव्ययानन्दं प्रदाय दुःखसमस्तमपहरति इति योगपुरुषः श्रीजगन्नाथः इति विषये दिग्मात्रं तत्त्वामृतमालोचितम्।

---

**सन्दर्भाः–**

१. स्कन्दपुराणम्, उत्कलखण्डः - २९/३,४।
२. श्वेताश्वततरोपनिषद् - ३/१९।
३. बृहदारण्यकोपनिषद् १/४/१।
४. पुरुषसूक्तम्- २।
५. तदेव - ३।
६. महापुरुषविद्या ७/५।
७. सा एव - ३/१२-१३।
८. सा एव ३/१११,११४।
९. पूजाकल्पे
१०. श्रामद्भगवद्गीता- १७/२३।
११. आथर्वणीय-पिप्पलादीय-प्रणवतारकोपनिषद् द्वितीयखण्डः
१२. नारदपरिव्राजकोपनिषद् ९/१९
१३. तैत्तिरीयोपनिषद्- २/१।
१४. मुण्डकोपनिषद् - २/१०।
१५. सा एव - १/४।
१६. कठोपनिषद् - २/६/७-८।
१७. सा एव १/३/१२।
१८. ब्रह्मसूत्रशाङ्करभाष्यम् - १/१/१।
१९. म.हाभारतम्, उद्योगपर्व - ६८/१०।
२०. स्कन्दपुराणम्, उत्कलखण्डः - २०/३२।
२१. विष्णुपुराणम् - ५/१७/३३।
२२. मुण्डकोपनिषद् - १/१/६।

**सहायकग्रन्थसूची**

१. नीलाद्रिमहोदयः - सं. डॉ. ब्रजकिशोर स्वाइँ, सद् ग्रन्थ निकेतन, श्रीमन्दिर, पुरी, २००७।

२. वामदेव संहिता -सं. डॉ. जयकृष्ण मिश्रः, सद् ग्रन्थ निकेतन, श्रीमन्दिर, पुरी, २००८।

३. श्रीपुरुषोत्तमक्षेत्रमाहात्म्य - श्री जगन्नाथ मन्दिर प्रशासन, श्रीमन्दिर, पुरी।

४. श्रीजगन्नाथ चेतनार शास्त्रीय भित्तिभूमि - डॉ. सुरेन्द्र कुमार मिश्र , श्री जगन्नाथ मन्दिर प्रशासन, श्रीमन्दिर, पुरी, २००९।

५. महापुरुषविद्या- .सं. प्रो.डॉ.सत्यवादी मिश्रः, पण्डित. सोमनाथ दाशः, श्रीजगन्नाथसंस्कृतविश्वविद्यालयः, श्रीविहार, पुरी।

६. रथ संहिता-डॉ. तुलसी ओझा, पुस्तक प्रकाशक ओ विक्रेता, विनोदविहारी, कटक-२, २०१८।

७. श्रीक्षेत्र श्रीमन्दिर ओ श्रीजगन्नाथ - पीतवास राउतराय, श्री जगन्नाथ मन्दिर प्रशासन, श्रीमन्दिर, पुरी, २०१२।

८. श्रीमन्दिर शब्दकोष - सुरेन्द्रनाथ दाशः, श्रीजगन्नाथ गवेषणा प्रतिष्ठान, भुवनेश्वर, २०१५।

९. श्रीजगन्नाथ तथ्यधारिका - डॉ. सुरेन्द्र कुमार मिश्र, ओडिशा साहित्य एकाडेमी, भुवनेश्वर, २०१८।

१०. अष्टादशपुराणेषु श्रीजगन्नाथः -डॉ. कान्हुचरणपण्डा, इल्लेर्दूर्रीर्म्र्मेस्ब्द घ्ह्दत्दुब, पुरी, २०००।

११. जगन्नाथमन्दिर ओ जगन्नाथतत्त्व -पण्डित सूर्यनारायण दास, फ्रेण्डस् पब्लिकेषन्स्, कटक चतुर्थसंस्करणम् -१९८५।

१२. पुरुषोत्तम श्रीजगन्नाथसंस्कृति - श्रीपरमानन्दत्रिपाठी, पुरी, २००३।

१३. श्रीजगन्नाथसंस्कृति - श्रीभास्करमिश्रः, नलिनीकान्तनन्द, एस्.वि.पब्लिकेषन्स्, प्रथमसंस्करणम् - १९९७।

१४. श्रीजगन्नाथदर्शनम् - डॉ. नृसिंहनाथ गुरुः, शिक्षाश्री पब्लिकेशन, पुरी, २०१४।

१५. Complete Sanskrit Works on Jagannatha Culture Vol.1.Edited by Prof. Harekrishna Satapathy, Rashtriya Sanskrit Vidyapeetha, Tirupati, 2006.


—०—


*सहायकाचार्यः, साहित्यविभागः,*
*कलियाचकविक्रमकिशोर-आदर्शसंस्कृतमहाविद्यालयः,*
*हेडिया, पूर्वमेदिनीपुरम् (प.व.)*

# आचार्यनिम्बार्कदृष्ट्या श्रीपुरुषोत्तम:

**डॉ. सुरेनकुमारमहापात्र:**

"एते चांशकला:पुंस: कृष्णस्तु भगवान् स्वयम्"[१] इति श्रीमद्भागवतोक्त-वचनानुसारं कृष्णप्रेम्णा अभिभूत: भगवद्भक्त्या परिपूर्ण: तथा द्वैताद्वैतमतवादस्य प्रवर्त्तक: आचार्य: निम्बार्क: वैष्णवसंप्रदायप्रवर्त्तनेषु अग्रगण्य: । अस्य आचार्यस्य महनीयताविषये भविष्यपुराणे वर्णितं यत् -

"निम्बार्को भगवान् येषां वाञ्छितार्थ प्रदायक:"[२] इति । जनानाम् आधिव्याधि-निवारणाय स्वयं सूर्यदेव: निम्बार्करूपेण संसारे आविर्भुत: । यदा समाजे आचारसंहिताया: परिपालनं न जायते, तस्मिन् समये भगवान् धराधाम्नि आविर्भूय धर्मस्य रक्षां तथा च अधर्मस्य विनाशं करोति । यथोक्तं भगवद् गीतायाम् -

"यदा यदा हि धर्मस्य ग्लार्निभवति भारत ।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ।।
परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय सम्भवामि युगे युगे ।।"[३] इति ।

आर्यावर्त्ते उत्कलभूमि: धर्मधारणाप्रचारप्रसारक्षेत्ररूपेण प्रसिद्धा वर्त्तते । अस्मिन् पवित्रप्रदेशे यथा अनेकेषां धर्मसम्प्रदायानाम् अभिबृद्धिरभवत्, भारतवर्षे परिलक्षितानां धर्मसम्प्रदायानां मूलभूता: भवन्ति सावध: आचार्या: । वेदोपनिषदानिधर्मग्रन्था: एतेषां शास्त्राणां कतिचित् तात्त्विकं गूढरहस्यं विचारयन्त: आचर्या: अस्माकं भारतवर्षे शैव-शाक्त-सौर गाणपत्य वौद्धादि संप्रदाय प्रवर्त्तका: सम्भूता: । एतेषां सर्वेषां संप्रदायानाम् आधारस्थलम् उत्कलप्रदेश इति कपिलसंहितायां वर्णितमस्ति।

श्रीसुदर्शनचक्रवतार: भगवान् निम्बार्काचार्य: एवं क्रमेण आविर्भुत: जात: । तैलङ्ग-ब्राह्मणपरिवारे लब्धजन्मा श्रीनिम्बार्क: । तस्य पिता अरुणमुनि: । कार्त्तिकपूर्णिमायां आचार्य: निम्बार्क: धराधाम्नि अवतरित: । वाल्यकालादारभ्य: तस्य अलौकिकी लीला सर्वजनगोचरीभूता जाता ।

ब्रह्मसूत्रग्रन्थोपरि आचार्यस्य निम्बार्कस्य तत्त्वपूर्णग्रन्थ: वर्त्तते वेदान्तपारिजात-सौरभम् । तस्य शिष्य: शङ्खावतार: आचार्य: श्रीनिवास: एतं भाष्यग्रन्थम् आधारीकृत्य वेदान्तकौस्तुभनामकं विस्तृतव्याख्याग्रन्थं कृतवान् ।

**निम्बार्कस्य दार्शनिकविचार:-**

निम्बार्कमते "द्वैत" तथा "अद्वैत" उभयोरपि सत्यं श्रुति मूलकं च एतेषां मते द्वैत अद्वैतयो: श्रुति: एक वद । अत: केवलं अद्वैतं स्वीकार्य द्वैतस्य निरामकरणं वा द्वैतं

स्वकार्य अद्वैतस्य निराकरणं अनुचितम् । केवलं एक स्वीकार्य । अपरस्य व्याख्या असम्भव। अन्ये वेदान्तीनामिव निम्बाकाचार्यमपि परम कर्मतत्त्वं स्वीकृतवान् । रामानुजाचार्य एकं मध्वाचार्यै यामकाशात् एवमेव पार्थव्यं यत् उभयो नारायणं अथवा विष्णुं ब्रह्म इति स्वीकुर्वन्ति । परन्तु वल्लभ इव निम्बार्कः केवलं गोपाल कृष्णं एव ब्रह्म इति स्वीकुर्वन्ति। निम्बार्काचार्य रचित दशोश्लोक्यां वर्णितं यत् -

"स्वत्ताबतोऽप्राप्त समस्तदोषमशेषकल्याणगुणैकराशमि व्युहाङ्गिनं व्रह्मपरं वरेण्यं ध्यायेन-कृष्णं कमलेक्षणं हरिम् ।।

श्रीराधा भगवतः आद्य सहधर्मि इति दोषव्य । अस्य जगतः निमित्तः उपदानकारणं च ब्रह्मण इश्वरः मकाशात् अस्य जगतः सृष्टिः केवलं लीला इति । अनेन तम्य इश्वरस्य किमपि प्रयोजनं नास्ति । जीवः कर्त्ता भोक्ता च । जीवः केवलं नज्ञानस्वरूपः ज्ञातं ज्ञातृत्वं धर्मवित् च ज्ञानं जीवस्य उभय स्वरूपं एवं धर्मं च । रामानुजाचार्यः एवं निम्बाकाचार्ययेः मतानुसारं जीवः अणुपरिणामस्वरूपः प्रेत्येण शरीरे जीवः भिन्नभिन्न अतः जीवः अनन्त इति उक्तं च -

"ज्ञान-स्वरूपं च हरेरधिनं शरीरसंयोगवियोग योग्य ।

अणुं हि जीवं प्रतिदेहभिन्नं ज्ञानृत्व वन्तं यवनन्तमाहु" [३] ।।

वहु अंशी तथा जीवः अंशः वह उपास्य तथा जीवः उपासकः, तथा च वहु ज्ञेयः जीवः ज्ञाता च । अतः जीवब्रह्मयोः भेदः स्वीकार्यः, तद्वत् ब्रह्म तथा जगत्तयोः मध्ये पार्थक्यं सुस्पष्टं । ब्रह्मकारणं तथा जगतकार्यं च । ब्रह्म चेतनं तथा जगत् अचेतनः अतः पक्षेस्मिन् ब्रह्म अपरपक्षे चिदचि- द्वयोः स्वाभाविकं भेदं वर्त्तमानम् । वस्तुतः भेदाभे दयेः मध्ये उभयोः सत्यमिति । कार्यकारणं वा अंशाशी मध्ये सम्बन्धः भेदाभेदात्मकम् । तै परस्परयोः न भिन्म् नाऽपि अभिनम् । स्वरूपतः कार्यऽ कारणमकाशात् इति वोधव्यम्। परन्तु कार्ये स्वकीया विशिष्टाकृतिः गुणं एवं क्रियाः विद्यमान हेतोः कारण सकाशात् भेदाभे इव । अतः निम्बार्कस्य मतवादम् स्वभाविकतया भेदोभदमिति कथ्यते ।

**श्री श्री पुरुषोत्तममहात्म्यम् -**

श्रीजगन्नाथस्यव प्राचीन नाम भवति श्रीपुरुषोत्तमः इति । अस्मिन् पुण्ये उत्कलप्रदेशे श्रीश्रीपुरुषोत्तमक्षेत्रे उत्कलीयानां इष्टदेव रूपेण उत्कलीय संस्कृतेः पृष्ठपोषकरूपेण च जगतःनाथः श्रीजगन्नाथः श्रीमन्दिरे विराजमानाः भवन्ति । तत्त्वयामलग्रन्थेपि वर्णितं यत्-

"भारतचोत्कलदेशे भूस्वर्गे पुरुषोत्तमे ।

दारुरूपी जगन्नाथः भक्तानांमभयपदः ।।[८] इति

अपिच शक्तिसङ्गम तन्त्रे वर्ण्णितं यत् -

"जगन्नाथप्रान्तदेशश्चोत्कलः परिकीर्त्तितः ।।[९] इति

श्रीजगन्नाथस्य मूर्त्ति यथा रहस्यात्मिका तथैव तत्त्वमपि रहस्याबृत्तम् च । तद्विषये

विभिन्ना: गवेषका: विभिन्न समये भिन्न भिन्न रूपेण व्याख्यां कुर्वन्ति । श्रीजगन्नाथ: न कस्यापि निर्दिष्ट धर्मस्य प्रचारक: । जगत:नाथ:श्रीजगन्नाथ: समग्रसृष्टौ यावन्त: जीवा: अजीवा: च विद्यन्ते तेषां सर्वेषां

"अपाणिपादो यवनग्रहीता, पश्यत्यचक्षु: म शृशोत्यकर्ण्ण: ।
म देत्तिवेद्यं न च सोस्ति वेत्ता तमाहुरस्यं पुरुषं महान्तम् ।।

हस्तपदरहित: परंब्रह्मं पुरुषोत्तममेव सर्वत्र विराजन्ते तस्मात् मकाशात् सर्वासां सत्त्वानां उत्पत्ति: समाहारोपि अत: शिशु - संहितायामपि वर्ण्णितं यत् -

"ज कार स्तु जगन्नाथो वलभद्रो ग कारक: ।
ना कारस्तु सुभद्रा च थ कारोऽपि सुदर्शन: ।।[११]

अत: स्पष्टं अनुमीयते, सर्वासां सत्त्वानां श्रीजगन्नाथ एव स्रष्टा धाता, नियन्ता च। एवं परिलक्षते यत् विभिन्न मतावलम्विन: महापुरुषा: अन्तिम समये श्रीक्षेत्रमागत्य तेषां मतवादं परित्यज्य श्रीजगन्नाथधर्म प्रचारे निमग्ना: सन्त: लवण इव विलीना: जाता:।

वृहत् नारदीय पुराणे श्रीक्षेत्रस्य माहात्म्य प्रसङ्गे वर्ण्णितं यत् -

"तथा समस्ततीर्थानं वरिष्ठं पुरुषोत्तमम् ।
सेनानीनां यथा स्कन्द: सिद्धानां कपिलोयथा ।।
वसूनां पावको यद्वव द्रुद्राणां शङ्करो यथा" इति ।

अस्य क्षेत्रस्य महात्म्यमनुभूय निम्बार्काचार्यैव विशिष्ट व्रहबवित् शैव शाक्त - वैष्णवादि सर्वेषु तीर्थेषु श्रेष्ठ: तथा मोक्ष-क्षेत्र रूपेण स्वीकृतवान् । अस्मिन् प्रसङ्गे विभिन्नेषु पुराणेषु वर्णितं यत् -

एवं श्रीजगन्नाथमाश्रित्य अत्रत्यानाम् आचार्याणां साधुनां विदूषां च मतवादा: एव सम्मिलिता: सन्ति । एतदर्थं शङ्खक्षेत्रे श्रीक्षेत्रे श्रीजगन्नाथपुर्यां सर्वै: एतै: महापुरुषै: आश्रमा: संस्थापिता: स्वस्वमतवाद: अपि प्रसारित: । इति ॐ ।

---

**सन्दर्भा:**

१. श्वेताश्वतरोपनिषद् -
२. वृहन्नारदीयपुराणम् - ५२/१४ ।
३. वृहद्धर्मपुराणम् - १४/३२ ।

—०—

***अध्यापक:, संस्कृतविभाग:, रामनगरमहाविद्यालय:***
***देपाल:, पूर्बमेदिनीपुरम्, पश्चिमवङ्ग:***

# एकशेषवृत्तिविमर्शः

डॉ युधिष्ठिरसाहुः

वृतु वर्तते धातोः 'स्त्रियां क्तिन्'[१] इत्यनेन सूत्रेण क्तिन्-प्रत्ययविधौ 'वृत्ति' इति पदं निष्पद्यते । अनेकार्थकोऽयं वृत्तिशब्दः । तथापि प्रक्रिया-दृष्ट्या अस्याः पञ्चविधत्वं स्वीक्रियते । कृत्तद्धितसमासैकशेषसनाद्यन्त-धातुरूपा पञ्चवृत्तयः। अत्र भेदे एकशेषस्य वृत्तित्वेन स्वीकारः अस्ति । वस्तुतस्तु एकशेषस्य वृत्तित्वमस्ति न वेति विचारः कर्तव्यः।

शिष्यते इति शेषः । एकस्य शेषः एकशेषः । अत्र एकशब्दः एकत्वसंख्यावाची न भवति । अपि तु एकशब्देन सम्पूर्णार्थबोधत्वं सम्पादयति।

**एकशेषस्य समासत्वविचारः –**

कैश्चित् आचार्यैः एकशेषः द्वन्द्वसमासस्य उपभेदत्वेन विचार्यते। वस्ततस्तु तन्न युक्तम्। 'प्राक्कडारात् समासः'[२] इत्यस्याधिकारे एकशेष-[३]समासविधायकसूत्रपाठाभावात्। अपि च पञ्चवृत्तिभेदाभिधाने समासैक-शेषयोः पृथक्त्वेनोक्तत्वात्। द्वन्द्वसमासान्तपदानाम् अन्त्यस्वरो दात्तत्व-प्राप्तौ एकशेषे तथा न प्रयुक्तात् । प्रमाणान्तरमपि उपस्थापनीय यत्- द्वन्द्वसमासे चशब्दसमावेशो दृश्यते। परन्तु एकशेषे 'यः शिष्यते स लुप्यमानार्थभिधायी' इति नियमात् स्वतः उभयोः पृथक्त्वभवज्ञायते । एतस्मात्कारणात् एकशेषः न समासः न च समासस्योपभेदः अस्तीति वक्तुं शक्यते । स्वतन्त्रतया एषा एका वृत्तिरेव । प्रसङ्गोऽस्मिन् नागेशे द्वन्द्वसमासस्यापवादत्वेन स्वीकृतः । बालमनोरमाकारेणोक्तं हि वृत्तयः 'तदेवं द्वन्द्वे पिरूपिते तदपवादमेकशेषप्रकरणमारभते' इति उक्तिः समर्थयति ।

**वृत्तयः –**

वृत्तिस्वरूपव्याख्यानेन प्रक्रियात्मकत्वाकलनेन च सर्वादौ वृत्तयः द्विधा विभज्यन्ते, यथा-

(क) पदत्वसम्पादिका वृत्तिः,

(ख) पदोद्देश्यिका वृत्तिश्चेति ।

**(क) पदत्वसम्पादिका वृत्तिः —**

कदाचित्समानशब्दानामेकत्वे सम्पादिते एकशेषत्वं सम्पद्यते। तदा एकशेषरूपावृत्तिः जायते। तादृशैकशेषः द्विधा–

१. सरूपाणामेकशेष:,

२. विरूपाणामेकशेषश्च ।

**सरूपाणामेकशेष:—**

समानं रूपं येषां ते सरूपा:, तेषां सरूपाणाम्, एका चासौ विभक्ति: एका विस्ति: । अत: सूत्रसमुच्चये 'सरूपाणामेकशेष एक विभक्तौ' (१/१/६४) । 'एक शेष:' इत्यत्र एकशब्द: प्रथमार्थक: 'एकविभक्तौ' इत्यत्र एकशब्द: समानार्थक: 'वृद्धो यूना तल्लक्षणश्चेदेव विशेष:'[४] इत्यस्मात् एकशब्दस्य अपकर्षणात् सरूपाण्येव दृष्टानि, न विरूपाणि इति अर्थ: निष्पद्यते । सरूपाणामिति निर्धारणार्थक षष्ठीविभक्तित्वात् । यदि 'एकशेष' इति पदे समासक्रियते चेत् एकशब्दस्य 'सरूपाणाम्' इत्यनेन पदेन सामन्वय: न जायते । कारणं यत् 'विशेषणानां वृत्तिर्न वृत्तस्य च विशेषणयोगो न' इति नियमप्रसङ्गात्।

तस्माज्ज्ञायते यत् एकविभक्तौ स्थितेषु समानरूपशब्देषु एक एव शिष्यते । अपरे लुप्यन्ते । य: शिष्यते स: लुप्यमानार्थाभिधायी भवति । यथा- राम, राम, राम = राम □ जस् = रामा:, राम राम = राम □ औ = रामौ इत्यादय: दृष्टान्तरूपेण गृह्यन्ते ।

समानार्थकबोधकशब्द: समानरूपतां स्वीकारे एकशेषत्वं प्रसज्यते। परन्तु समासस्वरूपशब्दानां भिन्नार्थवगतौ एकशेषत्वं न जायते। यथा मातृशब्द: जननीवाची अस्ति परिमाणवाची च भवति । तदा उभयो: एकशेषत्वं न । एतस्मात्कारणात् माता, मातरौ मातर: इति जननीवाचिन: शब्दस्य रूपम् । माता, मातरौ, मातर: इति परिमाणवाचिन: मातृशब्दस्य रूपम् । सूत्रे एतत्सर्वं विचिन्त्य 'एकविभक्तौ' इति पदप्रयुक्तमस्त्येव।

**विरूपाणामेकशेष:-**

तत्र केवलं सरूपाणां शब्दानामेकशेष: भवति विरूपाणां वा इति प्रश्ने उच्यते वार्तिकं यत्– 'विरूपाणामपि समानार्थानाम्' (वा. ७४७) इति । अर्थात् भिन्नरूपवतां समानार्थकानामप्येकशेष: भवति । उदाहरणं यथा- वक्रदण्डश्च कुटिलदण्डश्चेति लौकिकविग्रहे। वक्रदण्ड-कुटिलदण्ड इति अलौकिकविग्रहे 'विरूपाणामपि समानार्थानाम्' इति वार्तिकेन एकशेष: क्रियते । एतादृश: एकशेषस्तु विवक्षाधीन: स्यात् । प्रथमशब्दस्यैकशेषे 'वक्रदण्ड:' इति । अर्थद्वयस्य स्वीकारपक्षे द्वित्वविवक्षायां 'द्वयेकयोर्द्विवचनैकवचने सूत्रेण औ-प्रत्यये वक्रतुण्डौ' इति जायते । एतेन अवज्ञायते यत् विरूपाणामपि एकशेष: क्रियते ।

**(ख) पदोद्देश्यिका वृत्ति: -**

अत्र वृत्तौ निम्नोक्तदिशा पदत्वसिद्धौ भेदस्य सार्थकतां स्वीकरोति।

१. कृद्रूपा वृत्तिः,

२. तद्धितरूपा वृत्तिः,

३. समासरूपा वृत्तिः,

४. सनाद्यन्त-धातुरूपा वृत्तिः चेति ।

एतासां वृत्तीनां विचारः प्रसङ्गभिन्नत्वादत्र न विविच्ये ।

**समासशब्दे प्रत्ययभिन्नानामेकशेषः -**

यत्र एकशेषविधौ समाशब्दत्वे सति भिन्नप्रत्यययुक्तत्वेन मूलरूपं समानं वर्तते। यथा गोत्रप्रत्ययान्तस्य शेषत्वे युवप्रत्ययान्तशब्दस्य निवृत्तिः स्यात् । अत्रापि एकशेषः जायते । यथा- गार्ग्यश्च[५] गार्ग्यायणश्च गर्ग्यौ ।

**भिन्नलिङ्गो एकशेषः -**

स्त्रीवाचकशब्देन साकं पुंवाचकशब्दस्यापि एकशेषो भवति । अत्र पुंवाचकशब्द एकशेषत्वेन अवतिष्ठते । यथा- हंसी च हंसश्च = हंसौ[६] तथैव भ्राता च स्वसा च = भ्रातरौ, पुनश्च दुहिता च = पुत्रौ, माता च पिता च = पितरौ, मातापितरौ वा ।

परन्तु नपुंसकशब्दैः अनुपुंसकानां समासे नपुंसकशब्दस्यैकशेषः विकल्पेन भवति एकवद्भावामादाय एव । तथाहि–

''रक्षोहागममलध्वसन्दहाः प्रयोजनम्''[७] ।

**त्यदादीनामेकशेषः -**

सामान्यपदैः साकं यदि त्यदादीनां पदानामेकशेषः क्रियते चेत् त्यदादिशब्दानाम् एकशेषत्वं स्वीक्रियते । तथाहि-

स च देवदत्तश्च = तौ[८]

परन्तु त्यदादीनां पदानाम् एकशेषे परशब्दस्य शेषत्वेन विचारः क्रियते। तदर्थं वार्तिकं प्रोच्यते यथा- 'त्यदानां मिथः सहोक्तौ यत्परं तच्छिष्यते' उदाहरणं यथा-

(क) स च यश्च = यौ

(ख) सा च या च = ये

(ग) सश्च यश्च = तौ (अत्र भाष्यव्यतिक्रमः एव)

**पशुवाचकसंघातशब्देषु एकशेषः -**

अस्मात्प्राक् पुंवाचक-स्त्रीवाचकशब्दयोः पुंवाचकपदस्य एकशेषत्वेऽपि पशुवाचकपदानाम् एकशेषविचारे व्यतिक्रमः दृश्यते । पशुसंघातशब्दानां मध्ये पुंवाचक-स्त्रीवाचकशब्देषु स्त्रीवाचकपशुशब्द-स्येकशेषः सम्पद्यते । उदाहरण यथा- 'गावश्च गावश्च

इमा:'। अत्र प्रथम गोशब्द: पुंलिङ्गो द्वितीयस्तु स्त्रीलिङ्गे अस्ति । एकशेषे तु स्त्रीलिङ्गवाचकपदं तिष्ठति । तस्मात्कारणात् इमा: इति स्त्रीलिङ्गावबोधार्थं प्रयुक्तम् ।

अयं नियम: वन्यपशुसङ्घेषु न प्रवर्तते । अत: 'रूरव: इमे' अत्र इमे रूरवश्च इमा: रूरवश्च = रूरव इमे ।

---

**सन्दर्भाः**

१. पाणिनीयाष्टाध्यायी - ३/३/९४ ।
२. सा एव -२/१/३ ।
३. सा एव - १/२/६४ ।
४. सा एव - १/२/६५ ।
५. सा एव - १/२/६५ ।
६. सा एव - १/२/६७ ।
७. सा एव - १/२/६९ ।
८. सा एव- १/२/७२ ।

—०—

*संस्कृत-विभाग:, रेभान्सा विश्वविद्यालय:,*
*कटकम्, ओडिशा ।*

# कालिदाससाहित्ये राजधर्मः

डॉ. जितेन्द्रकुमारदाशः

संस्कृतसाहित्यवाङ्मये कालिदासः कविरूपेण सुविदितः । न केवलं भारते सः सुपरिचितः अपितु देशान्तरेष्वपि तस्य कवित्वं प्रसिद्धम् । तस्य ग्रन्थाः सकलविभवैः सुसमृद्धाः । तस्य सृष्टयः पाठकीयादृति-मवाप्ताः । ग्रन्थानां सफलतायैः कविना कथावस्तुना सह अन्ये विषयाः साङ्गोपाङ्गमालोचिताः । तस्य ग्रन्थानुशीलनेन ज्ञायते यत्- सः सर्वशास्त्रज्ञ आसीत् । दर्शनशास्त्रे तस्य यथा पाण्डित्यं नीतिशास्त्रेऽपि तदीया विद्वत्ता प्रशंसार्हा । कविना स्वग्रन्थेषु राजधर्मस्य विशद्वर्णनं कृतम् । रघुवंशस्य प्रथमसर्गे सूर्यवंशिनृपाणां गुणाख्यानप्रसङ्गे उक्तं यत् मया तेषां पराक्रमिनृपाणां चरितं वर्ण्यते येषां चरितं पवित्रम्, ये कलावाप्तिं यावत् कर्मरताः भवन्ति, येषां साम्राज्यम् आसमुद्रं व्याप्तम् । येषां रथमार्गः स्वर्गं यावत् परिव्याप्तः । तैः रघुवंशीयनृपैः यज्ञः शास्त्रानुसारं विहितः । याचकेभ्यः ते दानं कृतवन्तः । कृतापराधम् दण्डितवन्तः ।[१] इत्थं कालिदासेन स्मृतिनिर्दिष्टराजधर्मेण प्रजानृपयोः राजनीतिकसम्बन्धः सुदृढीकृतः । कवेः चक्रवर्ती सम्राट् सततं सामन्तनृपैः परिवृतः आसीत् । तस्य पादपीठं सामन्तनृपाणां मुकुटमरिचिभिः चर्चितम् । विक्रमोर्वशीय-नाटके राजधर्मं वदता कविना राजमुखेन निगदितं यत्- अहं प्रियायाः आज्ञापालनेन यथाहमात्मानं कृतार्थं मन्ये तथा सुविशालसाम्राज्यस्य प्रभुतां तथा सामन्तनृपाणां मुकुटमणिप्रभारञ्जित-पादमवाप्य धन्यं मन्ये ।।[२]

राजधर्मं वर्णयता कालिदासेन रघुवंशे लिखितं यत् राज्ञः आचरणं सर्वथा शान्तं सरलं च भवेत् । यतः नूतनतया प्राप्ता मेदिनी, हस्तगतं शासनं नववधुरिव प्रखरस्वभावेन वलात्कारेण च परगता भवति । यथा नववधूयोगः केवलं दयया सौजन्येन च सम्भवति तथा राजत्वं को मलस्वभावे नैव दीर्घकालं प्रति तिष्ठति । राजलक्ष्मीर्न विमुखायते । यथोक्तं कालिदासेन-

सदयं वुभुजे महाभुजः सहसोद्वेगमियं व्रजेदिति ।
अचिरोपनतां स मेदिनीं नवपाणिग्रहणां वधुमिव ।।इति ।[३]

राजनीतिशास्त्रमाधारीकृत्य कालिदासेनात्र सङ्केतितं यत् राज्ञा राज्यशासने सर्वथा मध्यममार्गः अवलम्बनीयः । तस्य नीतिः न कठोरा न वा मृदुला भवेत् । लोकतन्त्रं न कदापि सरलं सहजं न भवति अतः पालनार्थं राज्ञः निरलसता अपरिहार्या । अभिज्ञानशाकुन्तले कविना अस्मिन् विषये चर्चा कृता । तत्र कञ्चुकीवैतालिकाभ्यां राजधर्ममालोचयद्भ्यामुक्तम्- राज्यशासनस्य भारं वहन्तः राजानः सूर्य-पवन-शेषनागकल्पा भवन्ति । यथा सूर्यः सकृत्

तुरङ्गयुक्त: न विश्राम्यति, पवन: दिवारात्रं वहति, शेष: सर्वदा पृथ्वीं धारयति तथा लोकशासने न कदापि विश्राम्यति । अस्मिन् विषये अभिज्ञानशाकुन्तले-

भानु: सकृद्युक्ततुरङ्ग एव रात्रिन्दिवं गन्धवह: प्रयाति ।
शेष: सदेवाहितभूमिभार: षष्ठांशवृत्तेरपि धर्म एष: ।।इति।[४]

अत एव लोकशासनमत्यन्तं कष्टकरम् । तत्र दुष्यन्त: स्वयं निगदति राज्यलाभार्थमुत्सुकता सुखकरी भवति परन्तु राज्यलाभात्परं सुखं नावाप्यते । राज्यलाभात्परं राज्ञ: प्रतिष्ठा सहजतया न मिलति । यत: प्रतिष्ठासुखं तल्लाभस्योत्सुकतायामवतिष्ठते । प्रतिष्ठालाभात्परं तत्परिपालनवृत्ति: अत्यन्तं क्लेशकरी भवति । अत एव राज्यधारणं छत्रदण्डधारणमिव कष्टकरम् । अभिज्ञानशाकुन्तले उक्तम्–

''औत्सुक्यमात्रमवसादयति प्रतिष्ठा ।
क्लिश्नाति लब्धपरिपालनवृत्तिरेव ।।
नातिश्रमापनयनाय यथा श्रमाय ।
राज्यं स्वहस्तधृतदण्डमिवातपत्रम् ।।इति।''[५]

वैतालिकमुखेन कवि: राजधर्मं सूचयन् कथयति- हे राजन् ! भवान् स्वसुखस्य कृते उदासिन: किन्तु प्रजाकल्याणार्थं कष्टं सहते । अनुक्षणं लोकहिताय प्रयतते । अयं तु स्वभाव: महज्जनानाम् । भवान् कुमार्गगामिन: राजदण्डेन सन्मार्गमानयति समेषां कलहं समादधाति । प्रजापालनार्थं सकलानि विहितानि सम्पादयति । अहर्निशं प्रजाकार्यं सम्पादयता भवता भवत: 'राज' शब्द: सार्थकतां नीत: । कवि: वैतालिकमुखेन कथयति –

''स्वसुखनिरभिलाष: खिद्यसे लोकहेतो:
प्रतिदिनमथवा ते वृत्तिरेवंविधैव ।
अनुभवति हि मूर्ध्ना पादपस्तीव्रमुष्णं
शमयति परितापं छायया संश्रितानाम् ।।
नियमयसि विमार्गप्रस्थितानात्रदण्ड:
प्रशमयति विवादं कल्पसे रक्षणाय ।
अतनुषु विभवेषु ज्ञातय: सन्तु नाम
त्वयि तु परिसमाप्तं बन्धुकृत्यं प्रजानाम् ।। इति।''[६]

रघुवंशीयराज्ञ: दिलीपस्य शासनं रघुवंशमहाकाव्यस्य षष्ठसर्गे वर्णयता कविना उक्तम्- दिलीपस्य शासनं सुदृढमासीत् । यत्र तस्य राजत्वकाले बहिर्विहरन्तीनां गणिकानां वस्त्रं वायुरपि भयेन न स्पृशति स्म । को वा पुरुष: गणिकानां वस्त्रस्पर्शनाय प्रयतिष्यते ।।

दशरथस्य राजत्वकाले रोगस्य चिह्नमात्रमपि नासीत् । अत: तस्मिन् समये शत्रुभय: कथं वा स्यात् । ऋषीणां सुरक्षा राज्ञां प्रधानकर्तव्यमासीत् ।

कालिदासकाले 'देवा: यज्ञेन सन्तुष्टा भवन्ति' इति विश्वास आसीत्। देवप्रसादनार्थं दिलीपेन रघुणा च यज्ञा: सम्पादिता:। दिलीप: यज्ञेन मर्त्यम् इन्द्रश्च वृष्ट्या स्वर्गलोकं पालितवन्तौ । रघुवंशीय: यथा निष्ठया येन पराक्रमेण च अर्थोपार्जनं करोति स्म । तेनैव प्रकारेण अर्जितार्थं विनियुङ्क्ते स्म । रघो: दानमहिमानं वर्णयता कविना उक्तं यत्- रघु: विश्वजिद्यज्ञे समग्रं जगद् विजितं पुन: विजितं सर्वस्वम् अर्थिभ्य: प्रदत्तवान् । तस्य सर्वाणि पात्राणि नि:शेषं गतानि । अत: अर्घ्यदानार्थं मृण्मयपात्रं व्यवहृतम्। तत्र रघुवंशे उक्तम्–

''पुत्रो रघुस्तस्य पदं प्रशास्ति महाक्रतोर्विश्वजित: प्रयोक्ता ।
चतुर्दिगवर्जितसम्भृतां वो मृत्पात्रशेषामकरोद्विभूतिम् ।।इति।''७

राज्ञां प्रजानां हिताय यथा कर्तव्यमस्ति तथा परिवारं प्रति अपि कर्तव्यमस्ति । तेषां कृते प्रजानां परिवारस्य च हितं काम्यम् । राज्ञा पुत्रे पितृधर्म:, पितरि पुत्रधर्म:, स्त्रियां पतिधर्म: प्रजासु च राजधर्म: पालनीय:।

भारतीयसंस्कृतौ पुत्रस्य महिमा अनन्य: । दायेषु श्राद्धेषु च तस्या-साधारणं स्थानं वर्तते । नि:सन्तानत्वं दुर्भाग्यस्य लक्षणं स्वीक्रियते । पितुत्वमेकं सौभाग्यं भवति । पुत्रस्य स्पर्शमात्रेण पुलकितं भवति पितु: शरीरम् । दुष्यन्त: मारीचाश्रमे यदा भरतं स्पृशति तदा स: गभीरं सुखमनु-भवति । भरतस्य स्पर्शमात्रेण दुष्यन्तेन यादृश आनन्द: अवाप्त: तस्मिन् विषये स: कथयति-

''अनेन कस्यापि कुलाङ्कुरेण स्पृष्टस्य गात्रेषु सुखं ममैवम् ।
कां निवृत्तिं चेतसि तस्य कुर्यात् यस्यायमङ्कात्कृतिनो प्ररूढ: ।।इति।''८

पतिपत्नीसम्बन्धं स्वर्गीयममन्यत राजा अज: । स: स्वपत्न्या-मिन्दुमत्यां गभीरमासक्त: । तयो: प्रेम क्रौञ्चक्रौञ्च्यो: प्रेम इव सुदृढ: शुद्धञ्च । इन्दुमती अजस्य कृते गृहस्वामिनी, परामर्शदात्री, एकान्तसखी तथा सङ्गीतादिललितकलासु प्रियशिष्या आसीत् । सा अजस्य प्राणेभ्योऽपि प्रियतरा । अस्य प्रमाणं भवति तस्या: वियोगेन अजेन स्वप्राणा: परित्यक्ता । रामचन्द्रस्य पत्नीप्रेम सुस्पष्टम् । तस्य पितुर्भक्ति: नि:सन्दिग्धा । पितरि मातृषु च तस्य भक्ति: अनुकार्या । पितृसत्यं पालयितुं राज्याभिषेक-मस्वीकुर्वन् चतुर्द्दशवर्षाणि वनवासदु:खं निर्बाधं स्वीकृतवान् । या कैकेयी रामचन्द्रस्य वनवासकारणमासीत् । तां सम्मानयन् रामचन्द्र: कथयति- ''हे मात ! अस्माकं पिता स्वर्गप्राप्ते: साधनभूतसत्यात् न विच्युत: । एतस्य कारणं भवती एव ।।इति।''९

कालिदासस्य एकतन्त्रराजपद्धति: अभिप्रेता आसीत् । मन्त्रिण: प्रजाभि: न निर्वाच्यन्ते । तासां मतं न सम्मानयन् राजा मन्त्रिण: नियुङ्क्ते । राजान: कदाचित् राज्यभारं निक्षिप्तवन्त: । यदि राजा राज्यात् बहिर्गच्छति, गमनात्पूर्वं राज्यभारं मन्त्रिषु

निक्षिपति । अयमपि राजतन्त्रस्य नियम: । अयं नियम: अनुसृत: कालिदासेन । वसिष्ठाश्रमं प्रति गमनकाले दिलीपेन गन्धमादनपर्वतस्योपरि ऊर्वश्या सह विहारार्थं गच्छता पुरुरवसा, राजधान्यां स्थितेनापि विषयासक्तेन राज्ञा अग्निवर्णेन राज्यं सचिवाधीनं कृतम् । राज्ञ: अकालमरणे तत्पुत्रेण राजकार्यं सम्पाद्यते । पुत्र: अप्राप्तवयस्कश्चेत् तस्य मातृद्वारैव प्रजापालनदायित्वं मन्त्रिषु भवति । राजान: मन्त्रिणां परामर्शेण राज्यशासनं कृतवन्त: । तत्र दशरथ: मन्त्रिणां सम्मतिमवाप्य मृगयार्थं प्रस्थित: ।

अपरपक्षे एकतन्त्र राज्यपद्धति न सर्वथा दोषमुक्ता । अनेन राज्ञ: प्रजोत्पीडनं वर्धेत । अत: प्रजासु राज्ञ: अत्याचारं सम्भाव्य नीतिशास्त्रज्ञै: राज्यशासनाय नियमप्रणयनाधिकार: राज्ञे न प्रदत्त: अपितु विद्वत्सु: ऋषिषु च प्रदत्त: । राज्यशासनार्थम् नियमा: स्मृतिकारै: प्रणीता: । नियमान् परिवर्तयितुं न राजा प्राधिकृत: । कालिदासेन रघुवंशे उक्तं यत्– राजभि: मन्वादिप्रणीत-नियमा: अनुसरणीया: । तद्यथा-

(१) नृपस्य वर्णाश्रमपालनं यत्स एव धर्मो मनुना प्रणीत: ।

(२) रेखामात्रमपि क्षुण्णादामनोवर्त्मन: परम् ।
न व्यतीयुप्रजास्तस्य नियन्तुर्नेमिवृत्तय: ।।

अपराधविचारे राज्ञा धर्मज्ञानां परामर्शाधारेण दण्ड: श्रावित: । किं च राज्यशासनस्याङ्गरूपेण राजकुमारेभ्य: उचितशिक्षा प्रदीयते स्म । इन्द्रियनिग्रहार्थं ते अभिप्रेरिता: भवन्ति स्म । कौटिल्येनापि राजकुमाराणां समुचितशिक्षा इन्द्रियनिग्रहविषये उक्तम्[१३] । राज्ञ: दिलीपस्य रघो: शिक्षाविषये कीदृशी चिन्ता आसीत् तत् सूचयन् कालिदास: कथयति- राज्ञा दिलीपेन सुशिक्षित: विनयसम्पन्न रघु: युवराजत्वेन नियुक्त: । राज्ञा कुशेनापि स्वपुत्र: अतिथि: राजनीतिशास्त्रं पाठित: य: बाह्यशत्रून् विजित्य अन्त:शत्रूनपि पराजितवान् । राज्ञ: दशरथस्य मृगयायां द्यूते मद्यपाने स्त्रीसम्भोगे च अनासक्ति: आसीत् । राजा दिलीपोऽपि सर्वगुणसम्पन्न: ।

राज्ञां दिनचर्याविषये सविस्तरं विवेचितम् अर्थशास्त्रस्य प्रणेत्रा कौटिल्येन । तस्य मतेन दिवारात्रं षोडशभागै: विभज्य कार्याणि निर्धारयेत्। विषयेऽस्मिन् रघुवंशे लिखितमस्ति यत्-

''रात्रन्दिवसम्भोगेषु यथादिष्टं महीक्षिताम् ।
तत्सिषेवे नियोगेन स विकल्पपराङ्मुख: ।। इति।''[१४]

राजा प्रजानामाशयस्य षष्ठांशं कररूपेण गृह्णाति । धनलोभेन राजभि: प्रजाभ्य: धनं राज्ञां जीवनं सततं परोपकाराय समर्पितं भवतीति स्पष्टीकृतं कालिदासेन । महाराजअजस्य वर्णनाप्रसङ्गे तेनोक्तं यत् तदीयं न केवलं धनमन्येषामुपकाराय आसीत् प्रत्युत तस्य गुणा: अन्येषां कल्याणाय आसन्। तस्य बलं पीडितानां दु:खं न्यवारयत् । तस्य शास्त्राध्ययनं

च विदुषां सत्कारे लग्नमासीत् । तत्र कविना-

''बलमार्तभयोपशान्तये विदुषां सत्कृतये बहु श्रुतम् ।
वसु तस्य विभोर्नकेवलं गुणवतापि परप्रयोजना ।।इति।''[१५]

प्रजापालनेन राजा जीवनस्य सार्थकतां भजते । यत: 'राजा प्रकृतिरञ्जनात्' इति राजनीते: आदर्शतत्त्वं भवति । प्रकृतिनां नाम प्रजानामनुरञ्जनं शासकानां प्रधानलक्ष्यं भवति । त्यागं विना राजनीति: यथा विफला । राजधर्मे त्यागस्य महत्त्वं प्रतिपादयितुं कालिदासेन रघुवंशीयनृपाणां त्याग: वर्णित: । तत्र दिलीपेन क्षात्रधर्मस्य रक्षार्थं स्वकीयं शरीरं परित्यक्तम् । तथा रघुणा यज्ञसम्पादनाय सर्वस्वम्, अजेन स्वपत्न्या: कृते स्वप्राणा:। दशरथेन स्वौदार्यरक्षार्थ स्वपुत्रा: । रामचन्द्रेण प्रजानुरञ्जनाय स्वपत्नी सीता, कुशेन इन्द्रस्य सहायतायै स्वप्राणा: परित्यक्ता: । वस्तुत: अयं राजधर्म: सर्वै: राजभि: अनुसरणीय:।

---

**सन्दर्भाः**

१. सोऽहमाजन्मशुद्धानामाकलोदयकर्मणाम् ।
आसमुद्रक्षितीशानामानाकरथवर्त्मनाम् ।। - रघुवंशम् २ ।
२. सामन्तमौलिमणिरञ्जितशासनाङ्कमेकातपत्रमवनेन तथा प्रभुत्वम् ।
अस्या सखे चरणयोरहमधकान्तमज्ञाकरत्वमधिगम्य यथा कृतार्था: ।।
(विक्रमोर्वशीयम् ३/११)
३. रघुवंशम् ८/७ ४. अभिज्ञानशाकुन्तलम् ५/४
५. अभिज्ञानशाकुन्तलम् ५/६ ६. तदेव ५/७,८
७. रघुवंशम् ६/७६ ८. अभिज्ञानशाकुन्तलम् ७/११
९. रघुवंशम् १४/१६ १०. तदेव १/३४
११. विक्रमोर्वशीयम् - अङ्क ४ १२. रघुवंशम् १६/६, १/७
१३. अरिषड्वर्गत्यागेन्द्रियजयं कुर्वीत । अर्थशास्त्रम् - ३/६
१४. रघुवंशम् १७/४९ १५. तदेव ८/३

—o—

*प्राध्यापक:, संस्कृतविभाग:*
*अभिमन्युसामन्तसिंहार उच्चमाध्यमिकविद्यालय:*
*याजपुरम्, ओडिशा ।*

# संस्कृतस्य मानवं प्रति योगदानम्

डॉ.मेधाकुमारी

सम् पूर्वक कृ धातोः क्त प्रत्ययेन निष्पन्नः संसस्कृतशब्दः परिष्कृतार्थकः भूषणार्थकः वा । सं परिभ्यां करोतौ भूषणे इति कोषः । प्रस्तुतशीर्षकं समुचितत्वं बिभर्ति। यतो हि संस्कृतं भारतवर्षे उद्भावि समग्रे विश्वे च प्रभावि प्रतीयते। अस्य शीर्षकस्य मूलं मनुवचनं प्रतिभाति तथाहि -

एतद्देशप्रसूतस्यसकाशादग्रजन्मनः।
स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः ।। इति ।१

अत्र अग्रजन्मनः ब्राह्मणाः संस्कृतज्ञाः परिष्कृतस्वभावाः उच्यन्ते।
मानवसभ्यतायाःसंस्कृतेः चसंरक्षकं परिपोषकं वा संस्कृतम् इति ऋग्वेदवचनात् ज्ञायते-

संगच्छध्वं संवदध्वं संवो मनांसि जानताम्।
देवाभागं यथापूर्वे संजानाना उपासते।।
समानीव आकूतिः समाना हृदयानि वः।
समानमस्तु वो मनो यथा वः सुसहासति।। इति । २

सभायांसाधुः सभ्यःप्रज्ञावान् । तस्य भावः सभ्यता प्रज्ञता विद्वता वैदुष्यम् इति यावत्। उक्तं च -

येषां न विद्या न तपो न दानं ज्ञानं न शीलं न गुणो न धर्मः।
ते मर्त्यलोके भुवि भारभूता मनुष्यरूपेण मृगाश्चरन्ति।। इति ।

सभ्यतायाः सारभूता संस्कृतिः। सभ्यताद्वारा वाह्यचाकचिक्यस्य वाह्याडम्वरस्य च वर्णनं दृश्यते यथा -

मुक्ताः केलिविसूत्रहारगलिताः सम्मार्जनीभि र्हृताः,
प्रातः प्राङ्गणसीम्नि मन्थरचलद्बालाघ्रि लाक्षारुणा।
दूराद्दाडिमबीजसंकितधियः कर्षन्ति केलीशुकाः,
यद् विद्वद्भवनेषु भोजनृपतेस्तत्त्याग लीलायितम्।। ३

अत्र दानं लाक्षारूपस्य रूपाया: लाक्षाया:सार:। इत्थं अत्र सभ्यता संस्कृतिं ज्ञानरूपां सूचयति।

किं च-

रत्नस्तम्भेषु संक्रान्तै: प्रतिविम्बशतै वृत:।
ज्ञातो लङ्केश्वर: कृत्साद‌ञ्जनेयेन तत्वत: ।।

अत्र रावणस्य सभाभवनसमृद्धिवर्णनं रामायणे तत्कालीनसभ्यतां सूचयति।

पशून् पाहिमा गां हिंसी, अजां मा हिंसी।
अविं मा हिंसी इमं मा हिंसी द्विपादं पशुम्।।

मा हिंसी रेकसफं पशुम् मा हिंस्यात् सर्वाभूतानि इत्यादौ सभ्यता मानवसंस्कृतिरूपेण परिणता प्रतीयते।

य: स्वयं पचति ,स्वयं खादति अन्यस्मै न ददाति स: पापं खादति इत्याह ऋग्वेद: -

मोघमन्नंविन्दन्ते अप्रचेता: सत्यं व्रवीम वध इत्सतस्य।
नार्यमनं पुश्यतिनो सखायं केवलाघो भवति केवलादी।। ४.

अत्र उपकारभावना सभ्यतात: उत्थिता संस्कृतिं भजते। परमात्मा सर्वत्र विराजते अत: परधनस्य इच्छा न कर्तव्या। न्यायेन मार्गेण धनार्जनं कृत्वा जीवनयापनं कर्तव्यम्। एवं सदाचरणेन मोक्षप्राप्ति: भवति।

मातृवत् परदारेषु लोष्टवत् परद्रव्येषु ,
आत्मवत् सर्वभूतेषु य: पश्यति स पण्डित: ।।

तथा च -

ईशावास्यमिदं सर्वं यत्किंच जगत्यांजगत्।
तेन त्यक्तेन भुञ्जीथा: मा गृध: कस्यस्विद् धनम्।। इति । ५.

असतो मासद्गमय इति सभ्यताया: पाराकाष्ठारूपम्।

एवं निखिलसंस्कृतवाङ्मयम् ऋग्वेदात् आरभ्य डॉ.प्रमोदकुमारनायकरचितदारिद्र्यशतकं यावत् भारतीयसभ्यतानिरूपिता दृश्यते।

अयं निज: परोवेति गणना लघुचेतसां।
उदारचरितानां तु वसुधैव कुटुम्बकम्।।
अपि स्वर्णमयी लङ्का न मे रोचते लक्ष्मण।

जननीजन्मभूमिश्च स्वर्गादपि गरीयसी।।

राष्ट्रे जागृयाम ।

सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः।
सर्वे भद्राणि पश्यन्तु मा कश्चिद्दुःखभाग् भवेत्।।

अष्टादशपुराणेषु व्यासस्यवचनद्वयम्।
परोपकारः पुण्याय पापाय परपीडनम्।।

सत्यमेव जयते , अहिंसा परमो धर्मः,वृक्षो रक्षति रक्षितः,योगः कर्मसु कौशलम्,समत्वं योग उच्यते इत्यादि- भारतवर्षीयमानवसभ्यतासंस्कृति विश्वमानवसंस्कृतिसभ्यतायां विराजते।

मानवसभ्यताभारतवर्षीय सभ्यता। तत्र दशावतारः मानवसभ्यताविकाशसूचकः-

वेदानुद्धरते जगन्निवहते भूगोलमुद्बिभ्रते
दैत्यं दारयते बलिं छलयते क्षत्रक्षयं कुर्वते।
पौलस्त्यं दलते हलं कलयते कारुण्यमातन्वते।
म्लेच्छान्मुर्छयते दशाकृतिकृते कृष्णाय तुभ्यं नमः।। ६

बलरामः कृषिसभ्यतायाः प्रतीकभूतः या च संपूर्णसंसारे विराजते -

शोभामद्रेः स्तिमितनयनप्रेक्षणीयां भवित्री-
मंसन्यस्ते सति हलभृतो मेचके वाससीव।।७

भारतवर्षीयाणां सामाजिकीस्थितिः बौधिकस्थितिः इत्यादि सर्वथा विचित्रा अस्ति। केचित् वदन्ति यत् सभ्यतायाः विलोपः सम्भवति परन्तु संस्कृतेः विलोपः नास्ति । अन्ये तु सभ्यता एव चरमावस्थायां संस्कृति पदवाच्या भवति। सभ्यता कलापदवाच्या भवितुम् अर्हति संस्कृति तु आचारपदवाच्या। अतः मनुः चरित्रपदम् आचारे प्रयुक्तवान् इति मे मतिः। सभ्याता यदि वृक्षरूपा तदा संस्कृतिः फलरूपा । सभ्यता यदि पुष्परूपा संस्कृति तदा परागरूपा। सभ्यता शरीररूपा संस्कृतिस्तु आत्मरूपा। इत्थं सभ्यतासंस्कृत्योः यद् मञ्जुलवर्णनं सम्पूर्णसंस्कृतवाङ्मये दृश्यते तत् विश्वमानवसभ्यतासंस्कृतेः पोषकं प्रतिभाति। अत्र संन्देहः नास्ति। अत्र उक्तं भवति यत् -

संस्कृते संस्कृतिज्ञानं संस्कृते सकलाः कलाः।
संस्कृते सकलज्ञानं संस्कृते किं न विद्यते।।८.

इदं शीर्षकं विपुलं ग्रन्थं निर्मातुं प्रभवति किन्तु अत्र किञ्चिदेव उक्तम्। इत्थं मानवं प्रति संस्कृतस्य योगदानं संक्षेपेण दर्शितम् । संस्कृतं विना न कोऽपि शीलवान् बुद्धिमान् धनवान् च भवितुम् अर्हति। अतः संस्कृतम् अध्येतव्यम् इति मे विचारः ।

---

**सन्दर्भाः**

१.मनुस्मृतिः .२.२० ।
२. ऋ०१०-१९-१-२ ।
३.कुवलयानन्दः पृ.७०४ ।
४. ऋग्वेद-१०-११७-६।
५.ईशोपनिषद्.१।
६.गीतगोविन्दम् ।
७.पू.मेघ.५३।
८.भारतीयसंस्कृतिः पृ.२ ।

—०—

**अध्यापिका,संस्कृतविभागः,**
**सामसी--कालेज,सामसी,मालदा**
**पश्चिमवंगः।**

# छात्रशब्दपर्यालोचनम्

प्रो. अनुपमापृष्टिः

छात्रशब्दस्य उद्भवप्रसङ्गे प्रथमतः 'छत्रादिभ्यो णः'[1] इति पाणिनीय-सूत्रमायाति । तत्र छत्रं शीलमस्य इत्यर्थे णप्रत्ययो विहितः । संहितासु ब्राह्मणारण्यके च नोपलभ्यते छात्रशब्दस्तत्पर्यायवाचको वा शब्दः। शिवोपनिषदि[2] सीतोपनिषदि सूत्रग्रन्थेषु प्रथमतः छात्रशब्दस्य प्रयोगो दृश्यते । महाभारते छत्रप्रचारकथा लभ्यते । सूर्येण छत्रोपानहं क्रुद्धाय जमदग्नये प्रदत्तम् । तदीया पत्नी रेणुका निदाघप्रपीडितेति सूर्याय क्रुध्यति स्म जमदग्नि । अतः महाभारते भीष्मोवाच–

छत्रोपानहमेतत्तु सूर्येणैतत्प्रवर्तितम् ।
पुष्यमेतदभिख्यातं त्रिषु लोकेषु भारत ।।[3]

वस्तुतः महाभारतकथा वस्तुद्वयं निर्दिशति- आतपात् त्राणाय छत्राविष्कार इति कोमलाङ्गीनां नारीणां हितकाम्या चेति । आतपत्र-शब्दोऽपि एवमेव दर्शयति । एवञ्च महाभारतानुसारेण अवलिप्तस्य कार्यकार्यमजानत उत्पथप्रतिपन्नस्य च गुरोरपि दण्डो न्यायो मत इति छात्रशब्दस्य तादृशी व्याख्या तादृशगुरुप्रकल्पितैव विज्ञेया। तदुक्तम्–

गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः ।
उत्पथप्रतिपन्नस्य न्यायं भवति शासनम् ।।[4]

कौषितकीगृह्यसूत्रे–

क्षेत्रं हिरण्यं गां वासश्छत्रोपाहनमन्ततः ।
धान्यमन्नमयो शोकं गुरवे प्रीतिमावहेत् ।।[5]

अर्थात् अहरहः समिदाधानं भैक्ष्याचरणमधः शय्या गुरुशुश्रूषेति ब्रह्मचारिणो नित्यानि । तस्माद् गुरुशुश्रूषायां छत्रसमर्पणम् ।

आश्वलायनगृह्यसूत्रे[6]- ''समवर्तमानो मणी कुण्डले वस्त्रयुगं छत्रमुपानद्युगं दण्डं स्रगुन्मर्दनमनुलेपनमञ्जनमुष्णीषमित्यात्मने चाचार्याय च ।'' अर्थात् समावर्तमानोऽपि स उपकल्पनीयेषु वस्तुषु छात्रमवश्यं गुरवे प्रयच्छेत् ।

गोभिलगृह्यसूत्रे[7]- ''यद्यु वा उभयं चिकीर्षेद्धौत्रं चैव ब्रह्मत्वं चैवेतेनैव कल्पेन छत्रं वोत्तरासङ्ग वोदकमण्डलुं दर्भवटुं वा ब्रह्मासेन निधाय तेनैव प्रत्याव्रज्यान्यच्चेष्टेत ।'' अर्थात् दर्शपौर्णमासविधौ प्रत्याव्रजनकालौ उत्तरासङ्गोदकमण्डलुदर्भवटुभिः सत्रा छत्रस्यापि ब्रह्मासेन स्थापनमावश्यकम् । ननु गुरुशुश्रूषायां क्षेत्र-हिरण्य-गो-वसन-छत्रोपानहध्यान्यान्नशाकानामुल्लेख इति कथं छत्रधारणशील एव च्छात्रः ?

क्षेत्रहिरण्यादीनां गुरोः शिरसि च्छत्रवद्धारणेन गुरुसेवाभावात् । छत्रदण्डस्य च तदानीं सुलम्बत्वेन स्वयं तद्धारणक्लेशात् । सत्स्वप्यतेषु सर्वेषूद्धरणेषु 'छत्रधारणादेव च्छात्रः' इति नेदं प्रत्यक्षतः प्रमाणपरिपुष्टम् ।

महाभाष्यकारो भगवान् पतञ्जलिस्तु छात्रशब्दस्य तथ्यम् उपस्थापयति किं यस्य च्छत्रधारणं शीलं स छात्रः । किं चातः । 'राजपुरुषे प्राप्नोति' इति । यः पुरुषो राज्ञः छत्रं धारयति स छात्रशब्दाभिधेयः स्यादित्यर्थः । इति तत्र कैयटः । वस्तुतस्तु छत्रधारणशीलश्छात्रः । राजपुरुषेऽतिव्याप्तिरितिधियैव ''गुरुणा शिष्यश्छात्रवच्छाद्यः शिष्येण च गुरुश्छत्रवत् परिपाल्यः'' इति व्याख्यान्तरम् । कैयटस्तु महाभाष्यकाराशयमवबुध्य ततोऽप्यग्रे व्यतानीत्- ''अज्ञानं शिष्यस्य छादयति = निवर्तयति यतस्तत्र छात्रं शीलमस्य'' इति । नागेशोऽपि तट्टीकायां 'यथा छत्रमुष्णादि निवर्तगत्येवमज्ञानं गुरुनिवर्तयति' इति गौणीवृत्त्याः सम्यक् परिपालनं विदधाति । चान्द्रव्याकरणे तु छात्रः[८]- ''छत्रमिव गुरोः सुखहेतु-रित्यर्थः'' स्वीकृतम् । प्रक्रियासर्वस्वकार नारायणभट्टस्तु पतञ्जलिनिर्देशं समवगच्छं 'छत्रादिभ्यो णः' इति सूत्रव्याख्यानपरं प्रतिपादयति– 'छत्रेण तद्धारणादि गुरुसेवात्र लक्ष्यते ।'' तस्माद् 'गुरुपासनशीलश्छात्रः' इति ।

इदानीं तावत् 'छत्रं शीलमस्याः' इत्यर्थे कः शब्दः छात्रा वा छात्री वेति विचार्यते। आकरग्रन्थेषूभयोरेवानुपलम्भाद् विवादः । 'टिड्ढाणञ् द्वयसज्-दध्नच्-मात्रच्-तयप्-ठक्-ठञ्-कञ्-क्वरपः'[९] इति सूत्रेण खल्वणप्रत्ययान्ततायां ङीप् सिद्ध्यति स्त्रीत्वविवक्षायाम्। 'छत्रादिभ्यो णः' इति सूत्रेण णविधानमिति टावेव न ङीप् । अत्र महाभाष्ये कैयटप्रदीपाभिप्रायः– णप्रत्ययविधानेऽणप्रत्ययकार्यार्थं 'ताच्छीलिके णेऽणकृतानि भवन्ति'[१०] इति नागेशोक्त परिभाषायाः स्वीकारे गौरवात् अण्प्रत्यय-विधानमेव युक्तम् । परिभाषा च न कर्तव्या । 'छात्रादिभ्योऽण्' इति न्यायेन 'छत्रादिभ्यो णः' इति न्यायस्य परिभाषायाश्च प्रत्याख्याने भाष्यतात्पर्यमिति कैयटोऽभिप्रैति । तथा चाभिधाने सति अविशेषात् सर्वेभ्यः छत्रादिभ्यस्तच्छीले स्त्रियां ङीविष्ट इति 'छात्री' प्रयोगः आयाति ।

'छात्री' इतीष्यते तदा कैयटव्याख्यानं साधीयः, 'छत्वा' इतीष्यते तदा नागेशव्याख्यानम् । इष्टत्यानिष्टत्वर्मूलं त्वन्यदेव, तादृशं च नोपलभ्यते। कैयटमतेन सर्वत्रैव ङीप्, नागेशमतेन च कुत्र ङीप् कुत्र टाविति नियामकान्तरमन्वेषणीयम् । शिक्षाशीलमस्या इत्यर्थे शैक्षी शैक्षा वेति निर्णयो न भवति प्रयोगशरणत्वाद् वैयाकरणानाम् । नागेशेन स्फुटं 'छात्रा' इति शब्दः प्रयुक्तः साधितश्चेति 'छात्रा' इति प्रयोगाध्यापनस्यास्ति काचन परम्परा वैयाकरणानामिति विवक्षामि । महाभाष्यस्यैव व्याख्यानेन न प्रयोगाः कल्प्यन्ते । अन्येषां तु व्याख्यानं प्रयोगानुसारितया समाद्रियते न तु तेन प्रयोगः कल्प्यते इति । कैयटग्रन्थे तु

छात्राशब्दो न दृश्यते । कदाचन प्रयोगनिर्णयेऽनवहितोऽपि कैयटो भाष्यतात्पर्यनिर्णाय एव व्यापृतः स्यात् ।

नागेशात्पूर्वं प्रक्रियासर्वस्वकारेण नारायणभट्टेन सुस्पष्टं छात्री शब्द उदलेखि- छात्रादिणस्याणकार्यमिष्यते' तेन ङीप्, छात्री तापसी[११] इति । चान्द्र-जैनेन्द्र-सरस्वतीकण्ठाभरणव्याकरणेषु णप्रत्ययविधानेन न तदिष्टं ज्ञायते सम्यक् । हैमशाकटायनव्याकरणयोस्तु सुस्पष्टमञ्प्रत्ययः[१२] इति छात्राशब्दस्य कल्पनैवास्तं गच्छति (सिद्धहैमशब्दानुशासनम् २/४/२०) ।

छत्रं शीलमस्याः इति व्युत्पत्तौ कन्याः स्वासामाचार्याणां छत्रं वहन्ति स्म । आचार्यास्तथैव सेवन्ते स्म यथा शिष्यो गुरुम् ? कन्याश्च कीदृशीं गुरुदक्षिणां प्रयच्छन्ति स्म' इति जिज्ञासोदये सति विनिवेदना यद् भारते वर्षे कन्यानां तादृशगुरुसेवादिनियमाभाव एव । विद्यार्थिन्या अन्तेवासिन्याश्चापि प्रयोगानुपलम्भः ।

---

**सन्दर्भाः**


१. पाणिनीय अष्टाध्याय्यां ४/४/६२
२. शिवोपनिषदि ६, २१६, ७, ४६
३. महाभारते १३/९६/१३-१५
४. महाभारते १/२३४/५४
५. कौ.गृ. सू.२/३/१८,१९
६. आ.गृ.सू. ३/७
७. गो.गृ.सू. १/६/२१
८. चान्द्रव्याकरणे ४/४/६३
९. पाणिनीय अष्टाध्यायी सू. ४/१/१५
१०. परिभाषेन्दुशेखरस्य ८८ परिभाषा
११. 'छात्रादिभ्यो णः' (पा.अ. ४/४/६२)
१२. 'अड्स्थाच्छात्रादेञ्' (सिद्धहैमशब्दानुशासने ६/४/६०)


—०—


*नव्यव्याकरणविभागः,*
*केन्द्रीयसंस्कृतविश्वविद्यालयः, श्रीसदाशिवपरिसरः, पुरी*

# मणिहारस्य परिचयः

डाँ.शिवप्रसादवेहेरा

मणिहारस्य पूर्णनाम अलंकारमणिहारः अलंकारग्रन्थविशेषः । अयं यदुकुलमणिगुणगानपरकः तथा प्रौढालंकारग्रन्थः।

**अलंकारमणिहारस्य पदार्थः -**

अलंकारमणिहारः अलंकार एव मणिः सुवर्णादिरूप मणिहारः मणिमाला अलंकारमाला । अलंकार द्विविधः लौकिकः हारादिकटककुण्डलादिरूपः , अलौकिकः उपमा - अनुप्रासादिरूपः च । तत्र प्रथमः ब्रह्मसृष्टिविषयः , द्वितीयस्तु कविप्रतिभाविषयः। लौकिकेभ्यः मणिनिर्मितेभ्यः अलंकारेभ्यः कविप्रतिभा- निवर्तितः उपमा -अनुप्रासादिरूपः अलंकारः श्रेष्ठः प्रेष्ठः ज्येष्ठश्च।

निर्भूषं वनिताननं न शोभते एवम् अलंकारं विना काव्यं शब्दार्थरूपम् । यथा -

अनुष्णः अग्निः न संभवति तथैव अनलंकारं विना काव्यं न संभवति । वाच्यालंकारः , व्यंग्यालंकारः, ध्वन्यमानालंकारः कविताकामिन्याः हारादिसदृशाः भवन्ति इति मनसि निधाय श्रीकृष्णब्रह्मतन्त्रपरकालसंयमीन्द्रस्वामी अलंकारमणिहारनामकं ग्रन्थम् अन्वर्थभिधानम् अभिदधौ ।

अलंकारमणिहारः अलंकारगुणगानपरः चतुर्भागसम्बलितः अलंकारग्रन्थः। मुद्रितोऽयं ग्रन्थः चतुर्धा मैशुरनगरे सर्वकारस्य मुद्रणालये । तत्र आद्यभागः १९१७ तमे ख्रीष्टाब्दे, द्वितीयभागः १९१९तमे ख्रीष्टाब्दे, तृतीयभागः १९२३तमे ख्रीष्टाब्दे , चतुर्थभागः १९२५तमे खीष्टाब्दे च । तत्र प्रथमभागे उपमातः आरभ्य समासोक्तिं यावत् पञ्चविंशतिः अलंकाराः निरूपिताः वर्तन्ते। द्वितीयभागे परिकरादारभ्य मालादीपकपर्यन्तं पञ्चविंशत्यलंकाराणां विवेचनं दृश्यते। तृतीयभागे सारालंकारादारभ्य हेतुं यावत् चतुःपञ्चाशत् अलंकाराणाम् । चतुर्थभागे च रसवदलंकारात् आरभ्य चित्रालंकारं यावत् त्रयोविंशत्यलंकाराणां वर्णनं प्राप्यते। एवमेव सप्तविंशत्यधिकशतम् (१२७) अलंकाराः अलंकारमणिहारे निर्देशिताः । यथा -

क. सादृश्यमूलकालङ्काराः,
ख. सादृश्येतरमूलकालङ्काराः ।
ग. भावमूलकालङ्काराः ।
घ. प्रमाणालङ्काराः ।
ङ.शब्दालङ्काराः ।
च. मिश्रालङ्काराः चेति ।

**कुवलयानन्दात् गृहीताः अलंकाराः -**

असमं , उदाहरणं,तिरस्कारं,शब्दालंकारान् च विहाय अन्ये सर्वे अलंकाराः कुवलयानन्ददिशा प्रतिपादिताः सन्ति। कुवलयानन्दस्य परिणामः विस्तारः वा अलंकारमणिहारः ।

**वैशिष्ट्यम् -**

संप्रति प्राप्तेषु अलंकारग्रन्थेषु केचन ग्रन्थाः सन्ति यत्र रस-गुण-रीति-वृत्ति-ध्वनि-अलंकाराणां विवेचनं प्राप्यते। यथा काव्यप्रकाशः-साहित्यदर्पणः -रसगंगाधरादयः। केचन ग्रन्थाः वर्तन्ते यत्र केवलम् अलंकाराणां वर्णनं शोभते। यथा - अलंकारसर्वस्वम्, अलंकाररत्नाकरः, कुवलयानन्दः, अलंकारमणिहारः च ।

एवमेव अलंकारमणिहारस्य सारूप्यं कुवलयानन्दाधारितः इति परिलक्ष्यते। यतः कुवलयानन्दस्य प्रतिपाद्यालंकाराः तत्रैव वर्तन्ते। कुवलयानन्दे १२३ अलंकाराः विलसन्ति। अलंकारमणिहारे तु १२७ अलंकाराः । कुवलयानन्दे १७२ कारिकाः विद्यन्ते । अलंकारमणिहारे ततोऽधिकाः । कुवलयानन्दे ५१६ संख्यकानि उदाहरणानि। मणिहारे तु २३७७च। काव्यप्रकाशादिभ्योऽस्य वैशिट्यमपि परिलक्ष्यते। यतो हि काव्यप्रकाशे २१२ संख्यकाः कारिकाः ६०३ उदाहरणानि दर्शितानि सन्ति। साहित्यदर्पणे ७३८ उदाहरणानि विद्यन्ते।

अलंकारमणिहारः सूत्र वृत्ति- उदाहरणरूपेण त्रिविधः विभक्तः काव्यप्रकाशादिवत्। तत्र कारिकावृत्ति-उदाहरणानां कर्त्ता मणिहारकारः एव प्रतापरुद्रयशोभूषणम् इव। प्रतापरुद्रयशोभूषणे प्रतापरुद्रनृपतिपरकाणि उदाहरणानि विहितानि सन्ति। महापुरुषचरित्रनिबन्धना अलंकाराः आकल्पम् आकल्पयन्ति । एतादृशं महापुरुषमाधारीकृत्य विद्यानाथादिभिः अलंकारशास्त्राणि विरचितानि । मणिहारकारः अपि पुरुषोत्तमं जीवनम् इति मत्वा स्वस्य अलंकारमणिहारग्रन्थं प्रस्तुतवान्। अलंकारमणिहारनिर्माणे जतीन्द्रस्य मुख्यं लक्ष्यं हरिचर्चनम् एव ।

काव्यप्रकाशग्रन्थेभ्यः ग्रन्थस्यास्य वैशिट्यम् उदाहरणमादायोऽपि विद्यते। काव्यप्रकाशादौ कालिदासादिभ्यः उदाहरणमादाय लक्षणसंगतिः प्रवर्तते। कदाचित् लक्षणोदाहरणयोः अनानुरूप्यं संभवति। नवीनमुदाहरणं तु निर्माय लक्षणोदाहरणसंगतिः समीचीना अस्ति। विद्यानाथादय इव मणिहारकारेणापि स्वकृतलक्षणोदारणानि प्रदत्तानि । श्रीवेङ्कटेश्वरः अस्य ईष्टदेवः भवति। अतः तमधिकृत्य स्वसुखाय पुष्कलानि उदाहरणानि दत्तानि । उदाहरणस्य प्राचुर्य कारणमपि तेन प्रोक्तम्। इत्थं तत्र २३७७ संख्यकानि उदाहरणानि सन्ति। तानि सर्वाणि भगवतः कीर्तनपरकाणि वर्तन्ते। अत्र शब्दालंकाराः, अर्थालंकाराः,रसवदलंकाराः, नरसिंहादयालंकाराः विलसन्ति । अलंकारमणिहारकारः प्राचाम् आलंकारिकाणां ग्रन्थान् अतिशेते इति ।

तत्र अलंकाराणां विवेचनं प्रौढपाण्डित्यपद्धत्या कृतविद्यते । एतत् काव्यप्रकाशादिभ्य: पृथक् भवति। अयमपि कुवलयानन्दत: भिन्न: । काव्यप्रकाशादौ प्रमाणालंकारस्य वर्णना न विद्यते। कुवलयानन्दे रसगंगाधरे च शब्दालंकाराणां विवेचनं न प्राप्यते। शब्दार्थालंकाराणाम् अवरत्वं मम्मटादिभि: विभक्तम्। (**शब्दचित्रं वाच्यचित्रमव्यंग्यं त्ववरं स्मृतम्। काव्यप्रकाश:. पृ.१६**) परन्तु पण्डितराजेन शब्दालंकाराणामेव अधमत्वं मनसि निधाय मणिहारस्य अन्तिमे तेषां विवेचनं कृतम्। इत्थम् अर्थालंकारा:, रसवदलंकारा:, भावोदयालंकारा:, प्रमाणालंकारा: मिश्रालंकारा:,शब्दालंकारा: क्रमेण निर्देशिता:।

**अलंकारमणिहारकारस्य परिचय:-**

हरिकृष्ण: ब्रह्मचारी श्रीकृष्णब्रह्मतन्त्रपरकालस्वामी वा अलंकारमणिहारस्य कर्ता। अस्य समय: ख्रीष्टाब्दानाम् ऊनविंशशतकम्।

**जन्मस्थानम्** -

अलंकारमणिहारकार: श्रीकृष्णब्रह्मतन्त्रपरकालसंजमीन्द्र: दक्षिणभारतस्य द्राविडाञ्चलस्य कर्णाटकराज्ये जन्म लब्धवान्। इति प्राप्यते मणिहारग्रन्थे यथा-

लभ्म्याविभाति भगवांस्तेनाहिगिरिश्चभवति शेखरित: ।
तेन द्राविम्रम्यास्तैरेतद्भूषितं भरतखण्डम्।।

अयं वारणास्यां तथा गयायां सकलब्रह्मविद्याप्रपञ्चं नानाशास्त्रं निगमागमसंदोहं च अधितवान्।

दत्त्वानखरभौतिकतनुमीदृशभूतदेहमाददत्ताम्।
वाराणसिजनानां नारायण को नु वा भवेल्लाभ:।।
गच्छतु गयां वितनुतां विलोमतन्नामवाच्यमपि यदि वा।
विन्देदरविन्देक्षणा कथं तवपदं त्वया विवदमान: ।।

श्रीकृष्ण: कर्णाटजनपदस्य महीशूरप्रान्तीयस्य राजकुमार: आसीदिति ज्ञायते । यथा -

य: श्रीकर्णाटसिंहासनविदितमहीशूरराजाधिराजान्,
कृष्णाद्यान्वैष्णवाग्र्यानकृतसमहिलाञ् शंखचक्रांकनाद्यै:।
व्याख्यां भाष्यस्य तद्वत्परमुपनिषदां द्रामिडीनां च चक्रे,
विख्यातो दात्तभूमा स जयतु परकालाभिधानो यतीन्द्र:।।१ ।।

अस्य संवन्ध: आन्ध्रप्रदेशेन सह आसीदिति दृश्यते । यतो हि अनेन आन्ध्रप्रदेशे प्रचलिता-लोकोक्तिरपि प्रदर्शिता अस्ति। यथा -

शिक्षितमपि कौटल्यिं त्यक्ष्यति नैवासुरप्रकृति हृदयम्।
अपि वेणुदलाबद्धं श्वापुच्छं किमुऋजूभवेद् भगवन्।। २।।

अत्र आन्ध्रप्रदेश प्रसिद्धलोकप्रवादस्य अनुकृति: ।

शैरे त्वदन्यदैवं प्रत्येत्य भवाब्धितरणमाशं सन्।

विश्वस्य महावुद्बुदमभिपतति प्रावृषेण्यसरिति जनः ।। ३।।

किंच -

तववेषवहनतोऽभवदवहसनपदं स पौण्ड्रकोभगवन्।
क्रोष्टेव चित्रकायं दृष्ट्वा तप्तायसालिकन्कायम्।। ४।।

यद्यपि मणिहारकारः स्वस्य ग्रन्थे वाराणसी, गया,आन्ध्रः, कर्णाटकः, महीशूरप्रभृतीनां क्षेत्राणां वर्णनं कृतवान् । तथापि एतेषु क्षेत्रेषु कुत्र तस्य जन्म अभवत् इति परिशलिनेन वक्तुं न शक्यते । यतः सः महीशूरनगरे जन्म लब्धवान्। सः अध्ययनार्थं तु वाराणसीं गतवान्। तीर्थाटनाय गयां च।

मणिहारकारः स्वग्रन्थे वेङ्कटेशं नायकरूपेण उपस्थापितवान्। यथा आन्ध्रीयः विद्यानाथः प्रतापरुद्रयशोभूषणे प्रतापरुद्रम् ,उत्कलीयः विद्याधरः एकावल्यां नरसिंहदेवं च । आन्ध्रीयं वेङ्कटेश्वरं च परिलक्ष्य ग्रन्थेऽस्मिन् अयम् आन्ध्रीयः इति अनुमीयते। परन्तु जन्मस्थाननिर्देशानुसारं ज्ञायते यत् अयं कन्नडीयः (महीशूरीयः) । विद्यानाथपण्डितराज-अप्पयदीक्षितादयः दक्षिणभारतीयाः इति सर्वैः स्वीक्रियन्ते । मणिहारकारोऽपि दाक्षिणात्याधीवासी इति नास्ति संदेहलेशम्।

एम् कृष्णमाचारि मतानुसारं ज्ञायते यत् - अयं श्रीकृष्णब्रह्मतन्त्रपरकालस्वामी महीशूरप्रदेशे अवस्थित - परकालमठस्य एकत्रिंशतमः मठाधीशः आसीत् । तस्य पूर्वनाम कृष्णाचार्यः अभूत्। सः महीशूरनगरसमीपे पेनारनदीतीरे अमिदल्लानामक-ग्रामे जन्म लब्धवान् । तस्य पितुः नाम ताताचार्यः। मातुः नाम कृष्णादेवी। सः आनागण्डि, आटमागुन वनपति इति न्यायालयेषु कार्यं कृतवान्।

एतेन मणिहारकारः महीशूरप्रान्तीयः इति प्रतीयते। तेनापि स्वयं महीशूरप्रदेशस्य स्वजन्मभूमि मातृभूमि इति निर्देशितवान्। परन्तु स्वपित्रोः नाम न लिखितवान्। अत्र कृष्णमाचार्याणां वचनमेव प्रमाणत्वेन वक्तुं शक्यम् । यतः अयमेव महीशूरराज्यस्य विश्वविद्यालयं समलंकरोति ।

**कालः-**

श्रीकृष्णः स्वग्रन्थे अलंकारमणिहारकारे अलंकारविवेचनप्रसंगे भरतादारभ्य दीक्षित -विश्वेश्वरं यावत् सर्वेषाम् आलंकारिकाणां नाम लिखितवान् । यथा – उपमालंकारप्रसङ्गे भरतं रुद्रटं च स्मृतवान् ।५.अतिशयोक्तिप्रसंगे काव्यप्रकाशकार-मम्मटम् ६ अतिशयोक्तिप्रसंगे दण्डिनम् ७, रूपकस्य ८ दीक्षितम्, प्रौढोक्तिप्रसंगे जयदेवम् ९ , समासोक्तिप्रसंगे पण्डितराजम्, १० भामहम् उद्भटं च । ११.अतिशयोक्तिप्रसंगे अलंकारकौस्तुभकारस्य विश्वेश्वरस्य नाम १२ विशेषोक्तिप्रसंगे वामनस्य नाम १३ च लिखितवान्। अतोऽयम् अलंकारमणिहारकारः एतेषाम् आलंकारिकाणां परवर्ति इति ज्ञायते। विश्वेश्वरस्य कालः अष्टादशशताब्द्याः आद्यभागः। अतः श्रीकृष्णस्य समयः विश्वेश्वरस्य परवर्ती वभूव।

श्रीकृष्णः स्वग्रन्थे चतुर्थभागे रचनाकालं प्रदत्तवान्। यथा -

पञ्चसहस्रेष्वेकाधिकेषु यातेषु कलियुगेऽब्देषु।
अब्दे विकारि नामनि पूर्णोऽलंकारमणिहारः।। १४।।

ज्योतिषशास्त्रानुसारं तु अलंकारमणिहारकारस्य ग्रन्थसमाप्तिकालः १९००ख्रीष्टाब्दः इति । तदनुसारं तस्य शिक्षार्जनसमयः, कवित्वशक्तिः ,ग्रन्थरचनाकालप्रभृतीनां कृते यदि षष्ठिवर्षाणि प्रदीयन्ते तर्हि तस्य जन्मसमयः १८४० ख्रीष्टाब्दः भवति इति अनुमीयते। अतः १८४० -१९०० तम इति मध्यवर्तिकालः भवेत् ।

काव्यादर्शस्य कुसुमप्रतिमाटीकाकारः नृसिंहदेवशास्त्री **१** आवृत्यलंकार संदर्भे अलंकारमणिहारस्य नामोल्लेखं कृतवान्। कुसुमप्रतिमाटीकायाः रचनाकालः १९२५ख्रीष्टाब्द इति प्राप्यते। तदनुसारं १९२५ ख्रीष्टाब्दात् पूर्वमेव अलंकारमणिहारग्रन्थः प्रकाशितः अभूत्। अतः श्रीकृष्णब्रह्मतन्त्रपरकालस्य कालः १८४० तः १९०० मध्ये निश्चियते इति वक्तुं शक्यते।

इत्थं मणिहारकारो अलंकारकौस्तुभकारविश्वेश्वरस्य परवर्ति । कुसुमप्रतिमाटीकाकार नृसिंहदेवात् पूर्ववर्ति इति मन्यते।

एवम् कृष्णाचारिमतानुसारं ज्ञायते यत् सः १८३९ तमे ख्रीष्टाब्दे आविर्भूतः अभवत्। अस्माकं गणनानुसारं तु स १८४० ख्रीष्टाब्दे । एवमेव अन्तरं परिलक्ष्यते।

कृष्णमाचारि मते अयमेव १९१६ तमे ख्रीष्टाब्दे इहधामसम्बरणं कृतवान्। अन्यत्र कुत्रापि मृत्युकालविषये आलोचना न प्राप्यते।

एवं मणिहारकारस्य जीवनकालः सप्तसतिवर्षाणि इति अनुमीयते ।

एवम् अलंकारमणिहारे भामहादीनाम् अलंकारकौस्तुभकार- आचार्यविश्वेश्वरस्य नामोल्लेखात् मणिहारकारस्य समयः निश्चियते । अर्थात् भामहादि उत्तरवर्तित्वम् अलंकारकौस्तुभकारात् उत्तरवर्त्तित्वं कुसुमकारात् पूर्ववर्त्तित्वं च मणिहारकारस्य कालः निश्चियते ।

**कृतयः -**

दीक्षितवत् यतीन्द्रः बहून् ग्रन्थान् प्रणीतवान् इति प्रतीयते ।

साधकः श्रीकृष्णकविः षडविंशतिग्रन्थान् विरचितवान्। तेषु केचन अलंकारपरक- ग्रन्थाः , केचन स्तोत्रसम्बलिताः ग्रन्थाः, केचन च टीकाधारीताः ग्रन्थाः। एतेषां नामोल्लेखोऽलंकारमणिहारे हंससंदेश रसस्वादीन्यां टीकायां , कृष्णमाचारि कृत इतिहासग्रन्थे च प्राप्यते । यथा -

१.अलंकारमणिहारः।
२.रामेश्वरविजयचम्पूः।

३.रङ्गराजविलासचम्पू:।

४. प्रपन्नानन्दस्तव:।

५.हयवदनस्तुति:।

६.नृसिंहविलास:।

७.नवदुर्गकृष्णकृति:।

८.हंससंदेशरसास्वादिनीटीका।

९.अलंकरणमालिका।

१०. लक्ष्मीसहस्रत्नप्रकाशिका चेति।

एतेषाम् ग्रन्थानां नाम अलंकारमणिहारे उपलभ्यते।

११. प्रसन्नाभरणाटीका ।

१२. नवरत्नहारस्तुति: ।

१३. रसास्वादीनिटीका ।

१४.कार्तिकोत्सवदीपिका।

१५.श्रीनिवासविलास:।

१६.चपेटाहतिस्तुति:।

१७.उत्तरंगमहात्म्यम्।

१८.मदनगोपालमहात्म्यम् ।

१९.शठकोपालंकारपरिचर्चा इत्यादय: ।

एतेषाम् उल्लेख: कृष्णमाचारिणा इतिहासग्रन्थे कृत:।

परिगणितेषु ग्रन्थेषु अलंकारमणिहार:, प्रसन्नाभरणासहितनवरत्नहारस्तुति:, रसास्वादिनीटीका च प्रकाशिता: इति दृश्यते । अपरेषां ग्रन्थानां किमपि तथ्यं न प्राप्यते।

**विद्यावंश:**

मणिहारकार: यदुवंशावतंश: इति ज्ञायते ।

अलंकारमणिहारकारस्य जन्म सोमवंशीय - राजपरिवारे अभूत्। १५। अयं महीशूराधीपस्य कृष्णस्य आत्मज: आसीत्। १६ स ब्रह्मचारी यतिश्रेष्ठश्च। १७ अयं गुरुभक्त: श्रद्धावान् जिज्ञासु च आसीत्। अस्य वहव: गुरव: आसन्। तत्र निगमान्तदेशिको वेदगुरु: आसीत्। १८ सूत्रकारश्रीरामानुजाचार्य श्रुत्यन्तगुरु: । १९ वेदान्तसूरिरपि गुरु: आसीत्। परकालाभिधानो यतीन्द्रं प्रति श्रद्धां दर्शयामास ।२० यतिपुंगवरङ्गनाथ: तथा ब्रह्मतन्त्रपरकालोऽपि ।

यच्चक्राङ्कप्रभावाद्यदुनृपतिमुखा: प्राज्यसाम्राज्यगोपा ,<br>
भूपा: सर्वेऽपि खर्वेतरनिजयशस: श्रीमहीशूरपुर्याम्।<br>
तेऽमी शेषाद्रिवासा: श्रुतिमकुटकुरुत्तंससिद्धान्तसिद्धा: ,<br>
सर्वेऽप्युर्व्यां प्रथन्तां यतिकुलपतयो ब्रह्मतन्त्रस्वतन्त्रा:।।२१।।

एवं संयमीन्द्रस्य विद्यावंशपरम्परया ज्ञानगौरवमपि परिचीयते। पण्डितराजस्य पञ्चषा गुरव: आसन्। मणिहारकारस्य ततोधिका: गुरव:। एवं महागुरु - परंब्रह्म यश्च जगद्गुरु:, मातापितरौ जन्मगुरु, विद्यागुरव: रामानुजादय: च । एते सर्वे विद्यानिष्णाता: आसन्। तेभ्य: सर्वाविद्या: संयमीन्द्रै: संक्रान्ता: ।

**आराध्यदेवता-**

कृष्ण: कृष्णपरकालस्य वंशज: । तत् नाम्नि स्वनाम कृतवान् इति अनुमीयते। रुय्यकादिग्रन्थेषु अलंकारप्रसंगे द्वित्राणि उदाहरणानि वर्त्तन्ते । अलंकारमणिहारे तु २३७७ संख्यकानि भगवत्-परकाणि उदाहरणानि विलसन्ति । मम्मटादय: अलंकारनिरूपणाय देशकालादिविभिन्नावस्थानां नायकनायिकानां च उदाहरणानि दत्तवन्त:। मणिहारकारस्य अत्र लक्षद्वयं भवति । अलंकारनिरूपणं भगवतो यदुकुलमणे: गुणगानं च।

यद्यपि वाल्मीकिरामायणे, अध्यात्मरामायणे, प्रबन्धसेतौ रामचरितमानसे च भगवद्गुणगानं प्राप्यते। तथापि मणिहारकार: स्वग्रन्थेऽलंकारनिरूपणव्याजेन भगवद्गुणगानं कृत्वा सर्वान् आलंकारिकान् अतिशेते। स्वान्त: सुखाय तुलसि-रघुनाथ–गाथा इत्यनेन मणिहारकारस्य भगवद्गुणगानेन आत्मसुखप्राप्ति: तथा अलंकारनिरूपणेन पाठकानाम् आनन्दप्राप्ति: इत्युभयं कार्यं सिद्ध्यति। अयं श्रीकृष्णो ब्रह्मचारी यतिश्रेष्ठश्च। अयं वैष्णवधर्मावलम्बी । विष्णुविभूतिनां रामकृष्णवेंकटेश्वरादीनां गुणगानम् अनेन कृतम्।

यथा - सुरभीतिहरभुजोष्मा शरवर्षासारविशमिताशरदाव:।
परमहिमानीको यो दिशि दिशि शिरसा नमामि तं दाशरथिम्।। २२।।
यमुनातीरनिकुञ्जं कृष्णवशीकारमूलविचिचीषु।
प्राप्य हठात्तत्रागतममुमेव वशीचकार गोपवधू:।।
विषममृतं तस्य भवेद्यस्य मनो भवति माधवेऽस्खलितम्।
विषममृतं तस्य भवेद्यस्य मनो भवति माधवे स्खलितम्।। २३।।

स: विशिष्टाद्वैतवादमपि गृह्णाति इति । यथा उच्यते -
नानेह नास्ति किंचन जाने सर्वान्तरात्मभूतं त्वाम्।
भ्राम्यति योऽस्मिन्नर्थे भ्राम्यति सभवेचिरादहिगिरिन्दो:।। २४।।

अयं सरल: शान्त: उदारचरित्रसम्पन्न:। ग्रन्थेऽस्मिन् वेङ्कटेश्वरचरितं विलसति। अत: अयमेव वेङ्कटेश्वरस्य परमभक्त: इति मन्यते। यथा -
वृद्धाच्छप्रत्यय इह भवेत्वदीयो न चात्र संदेह:।
स्मरति हि भगवान् पाणिनिरमुमर्थ शेषशेलमौलमणे:।। २५।।

अलंकारमणिहारे उदाहरणप्रसंगे कारणमपि वर्त्तते -
भगवद्वर्णनौत्सुक्य पारवश्येन दर्शितम्।
बहूदाहरणं तत्र न कार्या दोषधीर्वुधै:।।
नृत्यति हृदि यस्य हरि: कलि: कृतं तस्य भवति हन्तयुगम् ।

शौरिर्न यस्य चेतसि कलिः कतं तस्य भवति हन्त युगम्।।२६।।

अयं न केवलं वेङ्कटेश्वरभक्तः अपितु हयग्रीवस्य उपासकः आसीत्। यथा प्राप्यते -

या वाण्या यतिराजराजवशगा चक्रेऽर्चिता या चिरात्,
प्राचार्यैर्निगमान्त देशिकममि श्रीब्रह्मतन्त्रादिभिः ।
याऽध्यास्ते परकालसंयमिवरास्थानीमिदानीमपि,
श्रेयस्संविदधातु सैन्धवमुकी सैषा परा देवता।। २७।।
विद्याविहति निषदया हृद्या तुरगानना धुतावद्या।
हृद्याहिता प्रद्यादाद्या सा देवता वुधासाद्या।। २८।।
अभ्यस्तैकैकविद्याः क्ववचनममकृतिं वक्ष्यिहृष्यन्तु मा वा,
तत्तादृक्सर्वविद्या परिचनिपुणाहन्तहृष्यन्त्यवश्यम्।
प्रायो मात्सर्यमेषां न खलुविधिवशाद्यद्यमीणामपि स्यात्,
किं कार्यं श्रीह्यासौ जयति गुणनिधिस्सर्वविद्यनिषद्या।। २९।।
ज्ञानानन्दामलात्मा कलिकलुषमहातलवातलनामा,
सीमातीतात्भूतमा ममहयवदना देवता धावितारिः।
याता श्वेताब्जमध्यं प्रविमलकमलकेरगेधरादुग्धराशिः,
श्मैरै सा राजराजप्रभृतिनुतिपदं संपदं संप्रदत्ताम्।। ३०।।

पणडितराजजगन्नाथः श्रीकृष्णभक्त । ३१ । मम्मटाचार्य -दण्डी–विश्वनाथादयः सरस्वतीभक्ताः च । मणिहारकारस्तु वेङ्कटेश्वरभक्तः । मम्मटपण्डितराजादयः न केवलं भगवत्परकाणि उदाहरणानि प्रदत्तवन्तः । अलंकारमणिहारकारः तु सर्वाणि भगवत्परकाणि उदाहरणानि दत्तवान् । एतेन अलंकारमणिहारकारस्य वैशिष्ट्यं प्रतिपाद्यते।

**पाण्डित्यम् -**

अलंकारसंप्रदायस्य परिसरे अलंकारमणिहारकारः नवीनालंकारिकरूपेण प्रतीयते । सः कविः आलंकारिकः भक्तशिरोमणिः च। अलंकारनिरूपणव्याजेन कविताकामिनी समालिङ्गितोऽयं भक्तिमेव अलंकारजगति सूचितवान् । अलंकारमणिहारः तस्य शक्तिं व्युत्पत्तिम् अभ्यासं च संसूचयितुम् अलम्। अलंकारमणिहारतः तस्य कवित्वं पाण्डित्यम् आलंकारिकत्वं च परिलक्ष्यते।

अयं समासोक्ति-मुद्रा-रत्नावल्यलंकारादीनाम् आलोचनप्रसंगे व्याकरण -ज्योतिष-छन्दादिशास्त्राणि आधारीकृत्य उदाहरणानि प्रदर्शितानि। तानि चित्रालंकारप्रसंगे निरूपितानि सन्ति । इतः परिलक्ष्यते यत् सः बहूनि शास्त्राणि अधीतवान्। सः स्वकृतानि उदाहरणानि प्रशंस्य वदति । पण्डितराजजगन्नाथः स्वप्रशंसां कृतवान् । तथैव मणिहारकरोऽपि यथा-

धन्या मम कवितेव क्वान्या भवितेह मृग्यतां जगति।
कन्यामिवोदधेर्यां मान्यां हृद्यां तनोति फणिगिरिराट्।। ३२।।

यथा भवभूति मालतिमाधवे स्वरचनायाः स्थितिदृढीकृता। यथा-

ये नाम केचिदिह नः प्रथपन्त्यवज्ञां

जानन्ति ते किमपि तान्प्रतिनैष यत्न:।
उत्पत्स्यतेऽस्ति मम कोऽपि समानो धर्मा
कालोह्ययं निरवधि विपुला च पृथ्वी।। ३३।।

तथैव मणिहारकारोऽपि स्वरचनाया: । यथा-

नन्दतु वा निन्दतु वा मन्द मनीषो निशम्यकृतिमेताम्।
हर्ष वाऽमर्ष वा सर्षप मात्रमपि नैवविन्दते।। ३४।।

अनेन प्रकारेणापि भट्टिकाव्यकार: स्वग्रन्थस्य महत्वं गाम्भीर्यं च प्रदर्श्य उक्तवान् ।
यथा- दीपतुल्य: प्रबन्धोऽयं शब्दलक्षण चक्षुषाम्।
हस्तादर्शमिवान्धानां भवेद् व्याकरणादृते।। ३५।।

मणिहारकार: स्वरचितग्रन्थस्य प्रौढत्वं साधारणजनानां कृते दुर्बोध्यमिति सूचयति स्म। यथा -

प्रौढतरो हि निबन्धो मूढमते दुर्निरीक्ष एव भवेत्।
दीपोऽतिमात्रमुज्ज्वलरूपो नेत्रातुरस्येव ।। ३६।।

अलंकारमणिहारग्रन्थे यानि यानि वचनानि प्रदत्तानि सन्ति तानि मन्दभाग्यानां कृते विन्दितुम् असम्भवानि। यथा-

प्रगुणामलसुगुणावलिमसृणतमाद्यन्तमेकरूपतया।
सुवसनमिव सुवचनमिह न मन्दभाग्यो नु विन्दते क्वापि।। ३७।।

अधिगतकाव्यपरिमललेशा: काव्यालोचका: समीक्षका: एव अस्यां कविताया: गुण-दोष -विवेक–चापलत्वं कर्तुं प्रथयन्ति। ३८।।

अलंकारमणिहारकारमते य: तस्य ग्रन्थस्य श्लोकं पठति स उपकारी, य: न पठति अपकारीति भवति। यथा उच्यते-

कोमलधीरस्मादपि कोमलमेकमपि योऽभिनन्देच्छलोकम्।
इह यस्तु कोपकारी कवयेऽस्मै भवति कोऽपकारी तस्मात्।। ३९।।

इमं ग्रन्थं य: यथा पश्यति तस्य कृते तथा मन्यते। यथा-

दुष्प्रेक्षो यो भविता दुष्प्रेक्षस्तेन हि प्रबन्धोऽयम् ।
सुप्रेक्षस्तु भवेद्यस्सुप्रेक्षस्तेन नात्र संदेह:।। ४०।।

यता पर्वतशिखरस्थै उपलै: सूची न गृह्यते । तथैव सरसकविता परिमलं वुधा एव जानन्ति न तु अन्ये । ३। सिकतामिव दुष्कवितां सर्वत: कठिनां न कोऽपि चर्वितुमीहते ४१। प्रौढकवीनां कविता खण्डशर्करा इव विभाति । यथा -

आपाततोऽतिकठिनाऽप्यास्वाद्यत एव रसधनावयवा।
कविता प्रौढकवीनां भविता ननु खण्डशर्करातुलिता।। ४२।।

रसप्रधानावयवाऽपि भवति। यथा च नारिकेल संमितं वचो भारवे:। तथैव सत्कवि वचनं रम्भाफलवत् सहृदयानां हृदयं मोदयते।यथा -

अविवेचितमपि मधुरं विवेचितं त्वन्तरतिरसधनत्वात्।
कदलीफलमिव सत्कविवचनं रसिकस्य भाति मधुरतमम्।।४३।।

संज्ञानां च मसृणनवनीतमिव भवति। तथा हि -

अनुगुणविवरणमसृणं ससितं नवनीतमिव रसज्ञानाम्।
भव्यतमं काव्यमिदं नव्यमतिस्वाद्यतां प्रपद्येत ।। ४४।।
सम्यक् विवेचनया काव्यजालं स्वच्छं तूलमिव भवति ।४५।।

अत्र प्राचीनत्वं नवीनत्वं वाऽपि रम्यताहेतुः। यथा-

न प्राचीनत्वं वा नव्यत्वं वाऽपि रम्यताहेतुः।
गुण एवैको ग्रन्थं गुणिनो निर्मत्सरा इममुपाध्वम् ।। ४६।।

प्राचीन एव वचनं मधुरं न नवीनमिति गदितुं न शक्यम्। ४७। स इमामलंकृतिमासाद्य निजां मनीषां प्रसाधयेत्। ४८। स अलंकृती भवेत् । एकविद्यानिपुणोऽस्याः कवितायाः मर्म ज्ञातुं न शक्नोति। अपि तु सर्वविद्या परिचयनिपुणा एव। यथा -

अभ्यस्त्यैककैविद्या क्वचनममकृतिं वीक्ष्य हृष्यन्तु मा वा।
तत्तादृक्सर्वविद्या परिचयनिपुणा हन्त हृष्यन्त्यवश्यम्।। ४९।

अनेन मणिहारकारस्य व्युत्पत्तिर्नानाशास्त्र -दिग्दर्शितावृद्धिर्वा लक्ष्यते। प्रायेणात्र ज्ञान -भक्ति -वैराग्य - सम्बलितानां, कदाचित् भगवतो मायायाश्चौदार्यादि–गुणसंपृक्तानाम् उदाहरणानां रसास्वादनं क्रियते। कदाचित् स्मृत्यर्थानुवादीनाम् उदाहरणानाम्। यथा -

क) कश्चित्त्वयि लुम्पति चेल्लुम्पतु सुपत्ययं परब्रह्मन्।
तव ननु यदा कदा वा भविता कश्चित्ततो न लोपो वा।।

ख) यन्मुहूर्तं क्षणं वाऽपि वासुदेवो न चिन्त्यते।
सा हानिस्तन्महच्छिद्रं सा भ्रान्तिस्सा च विक्रिया।। ५०।।

कदाचित् गीतानुसारिणः। ५१

एवं रामायण -महाभारताद्यनुसारीणि पुष्कलानि उदाहरणानि दृश्यन्ते। [५२]
अलंकारसर्वस्व –कुवलयानन्द -काव्यप्रकाश- रसगङ्गाधरस्थोदाहरणानां समीक्षणकृतो दृश्यते। कदाचिद् उदाहरणं संशोध्य स्वलक्षणानुसारिणि संगतिः संस्थापिता। अपह्नुति- अलंकारप्रसंगे दण्डीलक्षणस्य समीक्षा कृता।[५३]। उपयोगिता च तदनुकूल -उदाहरणप्रदानेन दर्शिता। मणिहारकारेण कुत्रापि आलंकारिकाणां निर्देशं कृतः। यथा-
प्रौढोक्तिलक्षणे जयदेवस्य -

यदुत्कर्षानिमित्तस्य तन्निमित्तत्व कल्पनम्।
प्रौढोक्तिरेषा कथिता जयदेवमुखैः बुधैः।।[५४]

तथा प्राचां भरतभामहादीनामर्वाचां दीक्षित -पण्डितराज -विश्वेश्वरादीनां च नामानि अलंकारमणिहारे समुल्लेखात् मणिहारकारस्य स्थानं नवीनालंकारिकवर्गे अवस्थातुमर्हति। के प्राचीनाः के च नवीनाः इति पृथक्विषयाः समालोचनीयाः।

कुवलयानन्दटीकाया: चन्द्रिकाया: रसिकरंजिन्या: च अश्रुतपूर्वाणां काव्यदर्पणकाराणां वुक्कपत्तनवेङ्कटेश्वरस्य अलंकारकौस्तुभम्। अलंकारचूडामण्यादीनां मणिहारकृतनिर्देशादयम् अर्वाचीनालंकारिक: इति निरूपयितुम् शक्यते।

अलंकारमणिहारे प्राचाम् अर्वाचीनानाम् अलंकारसिद्धान्तानां भेदप्रभेदादीनां समुल्लेखादयम् अलंकारकोषवत् प्रतीयते। अमरकोष-मेदिनिकोष-विश्वकोषादीनां , पाणिनि-पतञ्जलि-कात्यायनादीनां शब्दचक्षुणां कोविदां ,शब्दब्रह्मवेदान्तिनां सादरं स्मरणं करोति ग्रन्थकर्ता। पुराणेषु ब्रह्मवैवर्तम्- विष्णुपुराणम्- अग्निपुराणादीनाम् उदाहरणप्रसंगे वदति श्रीकृष्ण: । उपनिषदं श्रुत्यर्थं च मनसि निधाय उदाहरणं सृजति ग्रन्थकार:। वेङ्कटेश्वरं रामकृष्णौ चाधारीकृत्य बहूनि पद्यानि विरचितानि।

श्रीकृष्णकृत: अलंकारमणिहार: अलंकारनिकष: इति। यथा व्याकरणज्ञानात् ऋते भट्याटि काव्यानां ज्ञानं न भवति । तथैव अलंकारमणिहारं विना काव्यप्रकाशादिनां ज्ञानम् अपूर्णम् ।

अलंकारसर्वस्वटीका -विमर्शिनिकारस्य बहूनि मतानि उटङ्कितानि।१ । अयं मम्मटं प्रति श्रद्धामावहति। अप्पयदीक्षितं पण्डितराजजगन्नाथं च सादरं चर्चितवान्। यथा अन्यालंकारिक: अन्यम् अपवदति। यथा अयं खण्डनमण्डनावसरे प्रौढिमपशब्दं च न दर्शयति । भगवत् -भक्तत्वात् ,शान्तत्वात्, विनम्रत्वात् च। आनन्दवर्धनाचार्य: तथैव। परदोषोद्घोषणम् आत्मदुषणमेव इति श्रीमदानन्दवर्धनाचार्या:। अयम् आलंकारिको सहृदय: भक्त: कवि: समालोचक: च।

अलंकारमणिहारकार: स्वग्रन्थे अलंकारानादाय २३७७ संख्यकानि उदाहरणानि प्रदत्तानि। काव्यप्रकाशे तु शाकल्येन ६०३ संख्यापरिमितानि । एवं साहित्यदर्पणे ७३८ संख्यकानि । काव्यप्रकाशे २१२ संख्यका: कारिका: वर्त्तन्ते। अलंकारसर्वस्वे ८७ संख्यका: , अलंकारमणिहारे तु ततोऽधिका: , कुवलयानन्दे १२३ अलंकाराणां विचारविमर्शं प्राप्यते। अलंकारमणिहारे १२७ अलंकाराणां विवेचनं च दृश्यते ।

एतेन ज्ञायते यत् अलंकारमणिहारकार: अलंकारमादाय कारिका-उदाहरणं च अन्येभ्य: अधिकं कृतम्। प्रतापरुद्रयशोभूषणे ,एकावल्यां च क्रमेण प्रतापरुद्रदेवं नरसिंहदेवमाधारीकृत्य श्लोकान् उदाहृतानि। काव्यप्रकाशस्य उदाहरणानि नानाग्रन्थेभ्य: आनीय विहितानि सन्ति । साहित्यदर्पणे कानिचित् उदाहरणानि ग्रन्थकारेण निर्मितानि। कानिविधानि अन्येभ्य: ग्रन्थेभ्य: आनीतानि। यथा रसगङ्गाधरे निर्माय नूतनमुदाहरणानि विद्यन्ते। यथा च प्रतापरुद्रयशोभूषणे प्राकृतजनगुणगानं विद्यानाथादिभि: कृतम्। तथैव मणिहारकार: स्वनिर्मितश्लोकेषु भगवत: गुणगानं कृतवान्। प्रायेण उदाहरमानि आर्याछन्दसा कृतानि। अन्येभ्य: उदाहरणेभ्य: अस्योदाहरणस्य वैशिष्ट्यं प्रतीयते। अपराणाम् उदाहरणानां केवलं तत्र समीक्षा भवति। अयं कदाचिद् दण्ड्या: अनुरोधेन , कदाचित् अप्पयदीक्षितस्य

अनुरोधेन , कदा वा विद्यानाथस्य अनुरोधेन, कदाचित् मम्मटस्य अनुरोधेन मन्ये नानालंकारिकाणाम् अनुरोधेन उदाहरणानि कृतवान्।

शक्ति:,व्युत्पत्ति:, अभ्यासश्च इति त्रय: काव्यकारणं भवति। भगवतकृपया श्रीकृष्णब्रह्मतन्त्रपरकालसंयमीन्द्र: कवित्वशक्तिं, व्युत्पप्तिं , अभ्यासादीन् प्रत्यक्षं दृष्टिगोचरीकृतवान्। भारत्या: अधिकृतानां सर्वविद्यानां ज्ञानम् अन्तरेण कवित्वं कवनं रचनं वा न संभवति। अलंकारमणिहारग्रन्थे सर्वाषां विद्यास्थानानां विनिर्देश: उपलभ्यते। अलंकारमणिहारे न केवलम् अलंकाराणां ज्ञानं विदधाति। अपितु विभिन्नदर्शनपरकज्ञानं संपादयति -

ननेह नास्ति किंचन जाने सर्वानतरात्मभूतं त्वाम्।
भ्रम्यति योऽस्मिन्नर्थे भ्राम्यति स भवेचिरादहिंगिरिन्दो:।।

अत्र ब्रह्मसत्यं जगन्मिथ्या, एकमेव अद्वितीयब्रह्म:, इति वेदान्त उक्ति: परिलक्ष्यते। अत्र भ्रान्ति: अलंकारोऽपि वर्त्तते। एतेन वेदान्तदर्शनस्य ज्ञानं लभ्यते।

इत: ज्ञायते यदयं मणिहारकार: श्रीकृष्णब्रह्मतन्त्रपरकालसंयमीन्द्र: कवि: पण्डित: आलंकारिक: भक्त: समालोचक: सहृदय: च आसीत्। यथा उक्तम्-

बहव: सन्ति कवय: बहव: सन्ति पण्डिता:।
किन्तु सारस्वताकारो विरल: कवि पण्डित:।।

अलंकारमणिहार: अद्भूतपूर्णालंकारग्रन्थ: । तस्य रचयिता श्रीकृष्णब्रह्मतन्त्रपरकालसंयमीन्द्र: सुकवि आलंकारिक: ज्ञानी सन्थशिरोमणिश्च।

जयतु अलंकारमणिहार: ।
जयतु श्रीकृष्णब्रह्मतन्त्रपरकाल: ।। इति शिवम्।

---

**सन्दर्भा:**

१. अलंकारमणिहार.४.पृ-२८८।
२. अ.मणि.३-पृ ३०२।
३. तत्रैव. पृ.३०२।
४. तत्रैव पृ.३०१।
५. अलंकारमणिहार, १, पृ. ४४,४५।
६. तत्रैव. पृ. ३०३।
७. तत्रैव. पृ. १८५।
८. तत्रैव. पृ-१९८।
९. अलंकारमणिहार: ३, पृ. १४०।
१०. अलंकारमणिहार:, १- पृ.४३०।

११. तत्रैव पृ.४३२।
१२. तत्रैव .पृ.२८५।
१३. अलंकारमणिहार: भाग २. पृ. -३१९।
१४. अलंकारमणिहार: भाग ४, पृ. २८९।
१५. यशश्रीकर्णाटसिंहासनविदितमहीशूरराजाधिराजान् कृष्णद्यान्वैष्णवाग्यानकृत समहिलां शंखचक्रांकनाद्यै:। व्याख्यां भाष्यस्य तद्वत् परमुपनिषदां द्रामिडीनां च चक्रे ख्यातोदात्तभूमा स जयतु परकालाभिधानोयतीन्द्र: ।( तत्रैव.पृ २८८)।
असमग्रं गार्हस्थ्य स्वेनकृतां कृतिमिमां यतिवरेण।
श्रीशमुदे समपुरि श्रीकृष्णब्रह्मतन्त्रपरकाल:।। (तत्र ,पृ.२७८)।
१६. शेषाद्रीश्वरपादपद्मयुगलीकैंकर्यहेतो: पुरा
या घण्टाकिलभक्तिनम्रमनसा पद्मासनेनर्पिता।
तत्तत्तन्त्रपिशाचधूननकृते संकल्पत: श्रीपते:
जाताये निगमान्तदेशिकनिभात्कस्यैचिदस्यै नम:।। (अ.म.हा.,४, पृ२८८)।
१७. जिह्वासिंहासनाग्रसफुटनटनतुरंगस्यमं नीरशि जा।
स्पर्धानिर्धार्यवाचानिचयनिवुलितप्रत्यनीकप्रचार।
श्रीमान् रामानुजाचार्यप्रथिततमसतश्रीललामाऽर्कधामा
नित्यं श्रुत्यन्तविद्या गुरुरिह जगतां भद्रवत्तां विधत्वात्।। (तत्रैव. २८८)।
१८. संसाराटोपतापक्षपणनिपुणवा धोरणीसारणी-
श्री: वाणी संपूज्य पादादिमतुरगमहामन्दुराऽऽनन्दराशि:।
संख्यातीतप्रवन्धप्रशमितविमतव्रातशंकाकलंको
मोदान्वेदान्तसूरिदिशस्तु गुरु वरस्स्र्वतन्त्रस्वतन्त्र: ।।( तत्रैव.पृ२८६-८७)
१९. यशश्रीकर्णाटसिंहासनविदितमहीशूरराजाधिराजान्
कृष्णाद्यान्वेवैष्णवाग्र्यानकृतसमहिला शंखचक्रांकनाथै।
व्याख्यां भाष्यस्य तद्वत्परमुपनिषदां द्रामिडीनां च चक्रे
विख्यातोदात्तभूमा स य्जयतु परकालाभिधानो यतीन्द्र:।।( तत्र ,पृ.२८८)।
२०. घण्टावतारनिगमान्तरमानिवास
श्रीदेशिकेन्द्रयतिपुंगवरंगनाथा:।
श्रीब्रह्मतन्त्रपरकाल पदावतंसा
झीयासुरुज्जवलगुणागुरुसार्वभौमा:।। (तत्रैव पृ. २८८)।
२१. अ.म.हा.४- पृ२८७।
२२. अलंकार.मणिहार ,३,पृ २३२।
२३. तत्रै.,पृ.१६३।
२४. अलं म. न. ,१, पृ१६७।

२५. अलं.म.हा,४, पृ.३९।

२६. अ.म.हा.४.पृ.१७५।

२७. अ.म.,४,पृ-२८४।

२८. तत्रैव पृ. २८४।

२९. तत्र पृ. २८५।

३०. स्मृतापि तरूणातपं करुणया हरन्तीनृणा- मभङ्गुरतनुत्विषां वलयिता शतैर्विद्युताम्।
कलिन्दनगनन्दिनीतटसुरद्रुमालम्बिनी, मदीयमतिचुम्बिनी भवतु काऽपि कादम्बिनी।। ( रसगङ्गाधर:१ पृ.१)।

३१. नियतिकृतनियमरहितां ह्लादैकमयीमनन्यपरतन्त्राम्।
नवरसरुचिरां निर्मितिमादधती भारती कवेर्जयति।। (काव्यप्रकाश:१-पृ.१)।
चतुर्मुखमुखाम्भोजवनहंसवधूर्मम।
मानसे रमतां नित्यं सर्वशुक्ला-सरस्वती।।( काव्यादर्श: पृ.१)।
शरदिन्दु सुन्दररुचिश्चेतसि सा मे गिरां देवी।
अपहृत्य तम: संततमर्थानखिलान्प्रकाशयतु।। (साहित्यदर्पण: पृ.२)।

३२. अलंकारममिहार:,४,पृ-२७९ ।

३३. मालतिमाधवम् -१-६।

३४. अलंकार.मणि,४,पृ-२४७।

३५. भट्टिकाव्यम्-२२-३२।

३६. तत्रैव।

३७. अलंकारमणिहार: ४,पृ२८०।

३८ अनधिगत काव्यपरिमललेशा: कतिचन गभीरभावाढ्ये।
कविवचने मा जात्वपि गुणदोषविवेकचापलं यान्तु । । (तत्रैव -२८०)।

३९. अलंकारममिहार:,४,पृ-२८०।

४०. तत्रैव।

४१. सरसकविवचनपरिमलमभिजानन्ति हि वुधा: न चोन्ये।
प्रतिपर्वतशिखरस्थेर्न ह्युपले गृह्यते सूची।। (तत्रैव,पृ-२८१)।

४२. अन्तर्वहिरपिरसलपदवीयसीं रसविदग्रणी: को वा।
सिकतामिव दुष्कवितां चर्वितुमीहते सर्वत: कठिनाम्।।(तत्रैव पृ.२८१)।

४३. तत्रैव.पृ.२८१।

४४. अलंकारमणिहार: ,४,पृ.-२८२।

४५. सम्यग्विवेचनेन स्वच्छीभूतं व्यनक्ति गुणजातम्।
तुलमिव काव्यजालं न यदि तथा जातु न गुणलेशमपि।। (तत्रैव.पृ-२८२)।

४६. तत्रैव .पृ-२८३।

४७. क) पुराणमित्येव न साधु सर्वम् न चापि काव्य नवमित्यवद्यम्।

सन्तः परीक्ष्यान्यतरदभृजन्ते मूढः परप्रत्ययनेयवृद्धिः।।
( मालविकाग्निमित्रम् .पृ-३)।

ख) प्राचीनमेव वचनं मधुरं न नवीनमिति कृतिप्रवराः ।
भवतां हृदि मा भवतादभिनवमपिमधुकृतो न मधुरं स्यात्।।
(अलंकारमणिहार ,४,पृ२८३।)

४८. योऽलंकृतीरिमा मुहुरालम्व्यधियं प्रसाधयेत निजाम्।
सोऽलंकृतीतरकृतीः कूलंकषधीः कथं तुलोकिषते।। (तत्रैव पृ-२८३)।

४९. तत्रैव.पृ.-२८४।

५०. अलंकारमणिहारः २,पृ-४४।

ख) तत्र ,पृ-४५।

५१. आर्त्तो लक्ष्मीपतिरित्यर्थार्थी त्वां महावदान्य इति।
जिंज्ञासुर्ज्ञानमिति ज्ञानी तु शरण्य इति भजति भगवन्।।
(अ.म.हा.१,पृ-१५२)।

५२. अ.म.हा. २,पृ-२६९।
५३.अ.म.हा.,१,पृ- १८३।
५४.अ.म.हा. ,३,पृ.१४०।

—०—

*सामसीमहाविद्यालयः*
*सामसी,मालदा,पश्चिमवङ्गः*

# व्याकरणनये व्यञ्जनाविचार:

डॉ. गिरिधारीपण्डा

साधुत्वज्ञानविषया सैषा व्याकरणस्मृतिरिति विचारवैभवात् शब्दानुशासनप्रक्रिया प्रयोगार्हभूतायां भाषायां विवक्षितपदसाधुत्वोपपत्तये एका अनन्या अनस्वीकार्या च सर्वसम्मतिविषयविशेषा प्रमाणसिद्धा शिष्टानुगम्या क्रिया। शब्दानुशासनविधौ कालगरिम्णा एतस्या: स्वरूपं विभिन्नतामाधाय युक्तिसम्मतां विचारात्मिकां क्रियां प्रत्यग्रीकरोति। प्रतिपादनेनालं यत् सूत्रात्मिकायां भूमौ प्रविश्य अद्यत्वे पाणिनीयं प्रतिबध्नाति। सूत्रवार्त्तिकभाष्यभावेनोपनिबद्धं तद् व्याकरणं त्रिमुनिव्याकरणभावेन ख्यातं महिम्ना संकीर्त्तितञ्च। एतस्मिन् व्याकरणे मूलतत्त्वभावेन शब्दप्रक्रिया अर्थप्रक्रिया चेति विचारेण सोपानद्वयं संस्थापितं सत् प्रयोजनीयं तथ्यं प्रतिपादयति शब्दपदवाक्यादिप्रक्रियां नियमयति च। "शब्देष्वेवाश्रिता शक्ति: विश्वस्यास्य निबन्धनी"[१] (वा.प. - ) इत्युक्त्यनुसारेण प्रायोगिकशब्दस्य या शक्तिर्विद्यते , सा शक्ति: विश्वस्य निबन्धने जातीयसंहतौ च सहायिका भवति ।

शब्देनैवार्थस्याववोधनत्वात् शब्दस्य शक्ति: सर्वजनग्राह्या। भाष्यकार: तदीये महाभाष्ये शब्दस्य लक्षणद्वयं निरूपितवान्। तद्यथा - १) 9येनोच्चारितेन शब्देन सास्नालाङ्गुलककुदखुरविषाणिनां सम्प्रत्यतो भवति स शब्द:"[२]। २) "प्रतीतपदार्थको लोके ध्वनि: शब्द इत्युच्यते"[३] । "प्रतीतपदार्थको लोके ध्वनि: शब्द" [४]। एवं भावेन

शब्दस्य अनेकविधा परिभाषा , अर्थस्यापि अनेकविधं प्रतिपादनम्।
किन्त्विदं निश्चवचं यत् भाषानिबन्धन उभययो: याथार्थ्यमनस्वीकार्यम्।।

तत्र अर्थस्य प्रतिप्रत्ति-: शब्देनैव विधीयते । यदुक्तं हरिणा "पदार्थजातय: सर्वा: शब्दाकृतिनिबन्धना:"[५] । यत् तथ्यं स्वीकृत्य अलङ्कारशास्त्रेषु बहूनि काव्यलक्षणानि प्रतिपादितानि जायन्ते। यथोक्तं काव्यालङ्कारे "शब्दार्थौ सहितौ काव्यम्"[६] (काव्यालङ्कार: – १.१६) , काव्यादर्शे "शरीरं तावदिष्टार्थं व्यवच्छिन्ना पदावली काव्यम्"[७] (काव्यादर्श: – १.१०), काव्यभ्ङ्कारसूत्रवृत्तौ 9काव्यशब्दोऽयं गुणालंकारसंस्कृतयो: शब्दार्थयोर्वर्त्तते .... "[८] (का. सू. - १.१.१), 9शब्दार्थौ काव्यम्"[९] (काव्यलंकारे रुद्रट: – २.१) इत्यादीनि काव्यलक्षणानि सङ्गच्छन्ते ।

तथ्यमिदं प्रतिपाद्य उक्तमपि भर्त्तृहरिणा - "अर्थप्रबृत्तितत्त्वानां शब्दा एव निबन्धनम्"[१०]। "शब्देनैव अर्थापगुढ: जायते" इति तत् तात्पर्यम्। अत: "शाब्दबोधं प्रति शक्तिग्रहमेव

कारणम" । इति धिया शब्दस्य शक्ति: सर्वै: शास्त्रकारै: स्वीक्रियते । शब्दस्य प्रमाजनकत्वे सर्वै: शब्दै: सर्वेषां श्रोतृणां बोध: स्यादिति शाब्दबोधं प्रति वृत्तिप्रयोज्योपस्थितेरन्वयव्यतिरेकाभ्यां कारणत्वमवगम्यते। सा च वृत्ति: दाहं प्रति वह्न्यादिवन्न स्वरुपेण हेतु:, सर्वेषां बोधापत्तेरिति ज्ञानविषयीभूताया एव तस्या: कारणत्वमङ्गीक्रियते। वृत्तिपदव्यवहार्यत्वम् अर्थपदोभयनिरुपितसम्बन्धत्वं वेति वृत्तेर्लक्षणम्। यदुक्तं नागेशेन परमलघुमञ्जुषायां – "तद्धर्मावच्छिन्नविषयकशाब्दबुद्धित्वावच्छिन्नं प्रति तद्धर्मावच्छिन्ननिरुपितवृत्तिविशिष्टज्ञानं हेतु:"[११]संक्षेपेणात्रायं भाव: यत् - यद्धर्मावच्छिन्नविषयकशाब्दबोध अपेक्षित: तद्धर्मावच्छिन्ननिरुपितवृत्तिविशिष्टज्ञानं हेतु:। तत्र गृहीतशक्तिकात् पदात् शाब्दवोधस्य दर्शनात् अगृहीतशक्तिकात् पदात् शाब्दवोधस्यादर्शनात् शाब्दवोधं प्रति शक्तिग्रहस्य कारणता स्वीक्रियते । येन "गुड" इत्युक्ते गुडपदेन मधुरत्वस्य प्रतीतिर्नभवति । तस्या: शक्ते: आश्रयरूपेण स्फोटरूपं शब्दमेवामनन्ति वैयाकरणा: । शाब्दवोधे कारणत्वेन अपेक्षिता एषा वृत्ति: - "शक्ति: लक्षणा व्यञ्जना" चेति भावेन त्रिधा विभज्यते । काव्यमार्गे शब्दस्य त्रैविध्यं शक्तित्वं स्वीक्रियते - वाचक:, लाक्षणिक:, व्यञ्जकञ्च । यथोच्यते–

"वाच्योऽर्थोऽभिधया वोध्यो लक्ष्यो लक्षणया मत:।
व्यङ्ग्यो व्यञ्जनया ता: स्युस्त्रिस्र: शब्दस्य शक्तय:।[३]

शक्तिर्लक्षणाव्यञ्जना चेति वृत्तिस्त्रिधा। तत्र "व्यञ्जना क: पदार्थ:" इति विवेचनावसरे शास्त्रकारेषु वैमत्यं परिलक्ष्यते । मुख्यत: विषयेऽस्मिन् वैयाकरण-नैयायिकयो: विवाद: समधिक: । नैयायिका: व्यञ्जनां भिन्नशक्तिरूपेण न स्वीकुर्वन्ति। तेषां मते लक्षणायामेव व्यञ्जनाया: अन्तर्भाव: जायते। यद्यपि लक्षणाव्यञ्जने वैयाकरणैर्न स्वीक्रियेते। तथापि लक्षणाव्यज्जनाविषयको व्यवहारस्तेषामप्रसिद्धशक्तिपदपर्यायभ्रान्त्या तत्र तत्र भवतीति तदनुसृत्य वृत्तिभेदत्वेनात्र लक्षणाव्यञ्जने प्रतिपाद्येते।

व्यञ्जनापदार्थस्य निरूपणावसरे मुख्यार्थबाधनिरपेक्षवोधजनको ... इति यदुक्तं वैयाकरणै: तत्र तात्पर्यं तु लक्षणया व्यञ्जना गतार्था इति । यदुक्तं तत्र- "मुख्यार्थबाधनिरपेक्षबोधजनको मुख्यार्थसम्बन्धासम्बन्धसाधारण: प्रसिद्धाप्रसिद्धार्थविषयको वक्त्रादिवैशिष्ट्यज्ञानप्रतिभाद्युद्बुद्ध: संस्कारविशेषो व्यञ्जनाह्व इति। अत्र मुख्यार्थबाधरनिपेक्षेति बोधविशेषणम्। अनेन लक्षणया अगतार्थत्वं व्यञ्जनया उक्तम् । लक्षणया हि "मुख्यार्थबोधसापेक्षबोधजनकत्वम्। एतस्याश्च तन्निरपेक्षबोधजनकत्वमेवेति न तया गतार्था। मुख्यार्थासम्बन्धसाधारण इति । अनेन लक्षणयाऽगतार्थतां व्यञ्जनाया द्रढयति । लक्षणा हि मुख्यार्थसम्बद्धे एव , न तदसम्बद्धे । व्यञ्जनापदार्थश्च मुख्यार्थसम्बद्धासम्बद्धसाधारण इति

विशेष: । वक्त्रादिवैशिष्ट्यज्ञानेति । वक्त्रादयश्च वक्तृ-बोद्धव्य-काकु-वाक्य-वाच्यान्यसन्निधि-देश-काल-प्रस्ताव-चेष्टादय: । एवञ्च वक्त्रादिवैशिष्ट्यज्ञानेन प्रतिभया चोद्बुद्ध इत्यर्थ: ।

व्यञ्जनावृत्तिस्वीकारादेव निपातानां द्योतकत्वं स्फोटस्य च व्यङ्ग्यता भर्तृहर्यादिभि: प्रतिपादिता । द्योतकत्वं च स्वसमभिव्याहृतपदनिष्ठशक्तिव्यञ्जकत्वमिति । यथा अनुभवतीत्यादौ स्वम् अन्वादि , तत्समभिव्याहृतं भवतिपदम् , तन्निष्ठानुभवनिरूपित-शक्तिव्यञ्जकत्वमन्वादे: । एवं वैयाकरणानाङ्कृतेऽस्या: स्वीकार आवश्यक:। एषा च शब्दतदर्थ-पदपदैकदेश-वर्णरचना-चेष्टादिषु सर्वत्रैव , तथैवानुभवात्। वक्त्रादिवैशिष्ट्यज्ञानञ्च व्यङ्ग्यविशेषबोधे सहकारीति न सर्वत्र तदपेक्षेति । तदेवं लक्षणयैव गतार्था व्यञ्जनेति तर्किकमतं परास्तम् इति बोद्ध्यम् ।

वैयाकरणमते व्यञ्जनावृत्ते: स्वीकार: कृतो वर्तते, तथा हि गङ्गायां घोष: इति वाक्यप्रयोगे गङ्गापदं भगीरथखातावछिन्नजलप्रवाहे शक्तम्। प्रवाहे घोषाधिकरणता अनुपपन्ना: अत: गङ्गापदस्य तीरे लक्षणा तीरे घोषाधिकरणता हि उपपद्यते किन्तु वक्त्रा सर्वसौलभ्येन तीरे घोष: इति नोच्चार्यते किन्तु गङ्गायाम् इति उच्चारयतु तस्य अयमभिप्राय: तीरे घोष: इत्युक्तौ शैत्यपावनत्वादिप्रतीति: न स्यात्। अत: तीरे घोष: इति अनुक्त्वा गङ्गायां घोष: इति वदति तथोत्क्तौ गङ्गागतं शैत्यपावनत्वादिकं तीरे प्रतीयते तच्च शैत्यपावनत्वादिकं नाभिधया नापि लक्षणया प्रत्याययितुं शक्यते तद् प्रतीयते व्यञ्जनावृत्ते: आवश्यकता न च व्यञ्जनाविषये लक्षणावृत्या निर्वाह तथा च शैत्यपावनत्वादिविशिष्टं तीरं लक्षताम्। अत: लक्षणया तत् प्रतीतौ सिद्धायां व्यञ्जनाया: नास्ति उपयोग इति वाच्यम् अत्रोच्यते।एतदर्थं काव्यप्रकाशग्रन्थे उक्तं ज्ञानस्य विषयो हि अन्यत् फलमन्यत् उदाहृतम्। तस्य अयमभिप्राय: लक्षणया तीरज्ञानेन चरितार्थाफलबोधने असमर्थेति शैत्यपावनत्वादिप्रतीतये व्यञ्जनाया आवश्यकता एषा च शक्तिभिन्ना लक्षणाभिन्ना च अत एव मम्मटाचार्येणोक्तम् -

प्रयोजनेन सहितं लक्षणीयं न विद्यते, ज्ञानस्य विषयो हि अन्यत् फलमन्यदुदाहृतम इति ।।
पूर्वोक्तप्रकारेण व्यञ्जनाशक्ति: वैयाकरणानां मते अवश्यमेष्टव्या। सा त्रिविधापि वृत्ति: शब्दे तिष्ठति शक्त्या श्रयत्वान्यथानुपपत्या, स्फोटश्चैषाम्मते स्वीक्रियते , तादृशा शब्द एव प्रमाणम् ।

एवञ्च लघुमञ्जुषायां श्रीनागोजिभट्टेनैतद्विचारावसरे संस्कारविशेषो व्यञ्जनासंस्कारे विशेषश्च त्रिविध: इत्युक्तम्। तथा हि यथा लक्षणाया: मुख्यार्थवाधग्रहपूर्वकत्वमेव बोधो जन्यते तथात्र न भवति , अपि तु मुख्यार्थस्य बाधोऽस्तु न वास्तु अनया तु बोध: क्रियत एवेति मुख्यार्थबाधनिरपेक्षबोधजनकत्वम् संस्कारे प्रथमं विशेषणम् । लक्षणायां तु

मुख्यार्थसम्बन्धस्यैव अप्रसिद्धस्यैव बोध: क्रियते अनया तु अन्यथापि क्रियते एवेति मुख्यार्थसम्बन्धासम्बद्धसाधारणप्रसिद्धाऽप्रसिद्धार्थविषयकत्वमुक्तसंस्कारे द्वितीयो विशेष: उक्तसंस्कारस्योद्बुद्धानुद्बुद्धत्वसाधारण्येन सर्वत्रैव सर्वेषामनया बोध: स्यादिति दोषवारणाय वाक्यादिवैशिष्ट्यैव ज्ञानस्य एतज्जन्यबोधे सहकारित्वं स्वीक्रियते , इति वक्त्रादिवैशिष्ट्यज्ञानप्रतिभाद्युद्बुद्धत्वमपि तत्र तृतीयो विशेष: ।

व्यञ्जनाया: संस्काररूपत्वे , न्यायमते समवायेनात्मनिष्ठत्वे वेदान्तिमते तादात्म्येनान्त:करणनिष्ठत्वेन द्विष्ठत्वाभावेन सम्बन्धत्वासम्भवेनास्या: वृत्तित्वं न स्यादिति चेदत्रोच्यते - व्यङ्ग्व्यञ्जकभावसम्बन्धरूपैवात्र व्यञ्जनासम्मता । संस्कारविशेषस्तु तस्य ज्ञापक: । ज्ञापकहेतौ तस्मिन् व्यञ्जनापदव्यवहारो लाक्षणिक: । वैयाकरणलघुसिद्धान्तमञ्जुषायाम् इदमेवाह । द्योतकत्वं क्वचित् समभिव्याहृतपदीयशक्त्यभिव्यञ्जकत्वम् । अनेन मञ्जुषाग्रन्थेन व्यङ्ग्यव्यञ्जकभावरूपस्य सम्बन्धस्यैव व्यञ्जनात्वं प्रतीयते । व्यञ्जनास्वीकारे प्रमाणम् अर्कोऽयमस्तङ्गत: इत्यादि वाक्यत: मया सन्ध्योपासनं विधेयमित्यादि द्वितीयार्थबोधसिद्धये वाक्यपदादौ वा स्वीक्रियमाणशब्दतदर्थयो: द्योत्यद्योतकभावसम्बन्धरूपा व्यङ्ग्यव्यञ्जकभावरूपा शक्तितो लक्षणातो वा भिन्ना व्यञ्जनानाम्नीवृत्ति: स्वीक्रियते इयं व्याकरणशास्त्रप्राणभूतैवास्ति । एनामन्तरा व्याकरणसिद्धान्तभूतस्फोटस्वरूपस्य प्रद्योतनमेव न स्यात् ।

उक्तमेतद्विषये व्याडिना आचार्यप्रवरेण –

शब्दस्य ग्रहणे हेतु: प्राकृतो ध्वनिरिष्यते ।
स्थितिभेदे निमित्तत्वं , वैकृत: प्रतिपद्यते ।।

श्रीभर्तृहरिणापि एतद्विषये उक्तम् -

प्रत्येकं व्यञ्जका वर्णा: भिन्ना वाक्यपदेषु ये ।।

पूर्वोक्तप्रकारेण ध्वनिना स्फोटो व्यज्यते इति व्यवहारेण च ध्वनिनिष्ठा वर्णनिष्ठा । चैषा कथं बोधकशब्दनिष्ठापि इति शङ्कायामुच्यते – उपसर्गा: क्रियायोगे इति सूत्रे बोधकशब्दनिष्ठतयापि एषा प्रतीयते । स्फोटद्योतकध्वनिषु स्फोटव्यञ्जकतया लौकिकाद्यर्थद्योतिका गङ्गादिशब्दनिष्ठापि आरोपित्वं न द्योत्यम् इति ब्रुवाणेन भूषणकारेण शब्दनिष्ठतया एषा स्वीकृता ।

शाब्दबोधजनक-पदार्थोपस्थितिं प्रति शक्तिज्ञानत्वेन लक्षणाज्ञानत्वेन च हेतुतायां गौरवात्, लक्षणा नातिरिक्ता शक्तिरिति सिद्धान्तो महाभाष्यानुमोदित:, भूषणसारादिभिरपि तथैव स्वीकृत: । महाभाष्यकारेणोक्तम् "सर्वे सर्वपदादेशा: दाक्षीपुत्रस्य पाणिने: अर्थात् " सर्वे शब्दास्तात्पर्यानुसारं सर्वमर्थमभिधत्तेह्न इति भाष्यकथनेन लक्षणा नास्त्येव । भाष्यानुसारं

गङ्गापदं यथा जलप्रवाहविषये शक्तं तथैव तीरेऽपि, एवञ्चातिरिक्तवृत्तिस्वीकारप्रयुक्तं न गौरवमिति भाव:। न च एवं स्वीकारे गङ्गापदेन घटादेरप्युपस्थित्वापत्तिरिति वाच्यम्, तात्पर्यस्य शक्तिनियामकत्वेन तथा तात्पर्याभावेन च न तद्बोधापत्तिरिति वक्तुं शक्यत्वात् गौरवम्। लक्षणावृत्तिस्वीकारे कार्यकारणभावस्य प्रत्येकं व्यभिचार: , शक्तिजन्योपस्थितिं विनापि लक्षणा जन्योपस्थितित: शाब्दबोधात्। तथैव भूषणसारे कौण्डभट्टेन उक्तम् – ”शाब्दबोधं प्रति शक्तिजन्योपस्थिते: लक्षणाजन्योपस्थितेश्च कारणत्वं वाच्यम्। तथा च कार्य-कारणद्वयकल्पने गौरवं स्यात् अस्माकं पुन: शक्तिजन्योपस्थितित्वेनैव हेतुता इति लाघवम्।। भर्तृहरिणा वाक्यपदीये प्रतिपादितम्। यथा —

“एकमाहुरनेकार्थं शब्दमन्ये परीक्षका:।
निमित्तभेदादेकस्य सार्वार्थ्यं तस्य भिद्यते।।
यथा सास्नादिमान् पिण्डो गोशव्देनाभिधीयते।
तथा स एव गोशब्दो बाहीकेऽपि व्यवस्थित:।।
सर्वशक्तेस्तु तस्यैव शब्दस्यानेक धर्मण:।
प्रसिद्धिभेदात् गौणत्वं मुख्यत्वं चोपवर्ण्यते।

अत एव शाब्दबोधजनक-पदार्थोपस्थितिं प्रति शक्तिज्ञानत्वेन लक्षणाज्ञानत्वेन च हेतुतायां गौरवात्, लक्षणा नातिरिक्ता शक्तिरिति सिद्धान्तो महाभाष्यानुमोदित:, सर्वै: वैयाकरणैरपि तथैव स्वीकृत:।

---

**सन्दर्भा:**

१. वाक्यपदीयम् – १.११८
२. महाभाष्यम्- पस्पशा.
३. तत्रैव
४. तत्रैव
५. वा. प. ब्रह्मकाण्डम्
६. काव्यालंकार: - १.१६
७. काव्यादर्श: - १.१०
८. काव्यलंकारसूत्रम् - १.१.१
९. काव्यलंकारे रुद्रट: - २.१
१०. वा. प. १-१३
११. परमलघुमञ्जुषा-शक्तिनिरूपणम्

# नाट्यशास्त्रदृशा उत्तररामचरितस्य समीक्षा

**डॉ.वसन्तकुमारमिश्र:**

यद्यपि उत्तररामचरितस्य नाटकत्वपरीक्षणसन्दर्भे लिखितानि सन्ति नैकानि शोधपत्राणि तथापि पत्रमिदं नाव्यमावहति । हि उत्तररामचरितस्य परस्तात् रचितानां नाट्यलक्षणपरकशास्त्राणां दशरूपक-नाट्यदर्पण-साहित्यदर्पणादीनामाधारेण तस्य समीक्षणं कृतं दृश्यते । तत्रापि नान्दी-प्रस्तावना- अर्थप्रकृति - कार्यवस्था - सन्धिप्रभृतीनां प्रसिद्धानां नाट्यतत्त्वानां समीक्षणं केवलं विहितमस्ति । परमेतै: सह बहूनां धर्मि-गति-वृत्ति-प्रवृत्ति-भाषा-स्वर-अभिनय-नाट्यालङ्कार-इतिवृत्त -अर्थोपक्षेपकादीनां लक्षणं प्रयोगविधिं च नाट्यशास्त्रे सविशदं प्रतिपादयति भरतमुनि: । तदाश्रित्यैव लक्ष्ये लक्षणसमन्वय: करणीय इति धिया नाट्यशास्त्रदृशा उत्तररामचरितस्य समीक्षाऽत्र विधीयते।

नाट्यशास्त्रस्य प्रणेता भरतमुनि: पूर्वजन्मा उत्तररामचरितस्य रचयिता भवभूति: परजन्मा इत्यस्मिन् विषये विपश्चितां नास्ति काऽपि विप्रतिपत्ति: । तत्र मुने: समय: ई.पू.पञ्चमशताब्दीत आरभ्य ई. प्रथमशताब्दीमध्ये निधार्यते [1] । तथैव भवभूते: समय: ई. सप्तमशताब्द्या: उत्तरभागत: ई. अष्टमशताब्द्या: प्रथमभागमध्ये (६५०-७५०ई ) निश्चीयते [2] । भरतमुने: वहुवर्षेभ्य: परं भवभूते: नाटकस्य उत्तररामचरितस्य प्रणयनमभूदिति अवितथम् । एतयो: द्वयो: मुनिस्तु आद्य आलङ्कारिक: नाट्यशास्त्राख्यस्य प्रथमस्यालङ्कारशास्त्रस्य विरचनात्, अपर: भवभूति: प्रथितयशा: नाट्यकार: द्वयो: नाटकयो: महावीरचरित-उत्तररामचरियो: एकस्य मालतीमाधवाख्यस्य प्रकरणस्य च ग्रथनादिति ज्ञायते विद्वद्भि: ।

नाट्यशास्त्रं नाट्यस्य नाम नाटकप्रकरणादिरूपकदशकस्य लक्षणप्रतिपादकं शास्त्रम् । अभिनवगुप्तानुसारं नाट्यस्य नटवृत्तस्य शास्त्रं शासनोपाय: ग्रन्थ: नाट्यशास्त्रम्[3] । एतदनुश्रुत्य नाटकादीनि लिख्यन्ते समीक्ष्यन्ते च । संस्कृतवाङ्मये केनाऽपि यदि दृश्यकाव्यं निर्मीयते तर्हि तत्र प्रामाणिकं शास्त्रं नाट्यशास्त्रमाश्रित्य लिख्यते । महान् नाट्यकार: भवभूति: यस्मिन् समये (ई. अष्टमशतके) आसीत् तदा केवलं नाट्यतत्त्वपरकं शास्त्रं नाट्यशास्त्रं विहाय नान्यदासीत् । यदि नाट्यशास्त्रस्य रचनाकाल: प्रथमशताब्दी निश्चीयेत तर्हि सप्तशतवर्षाणामभ्यन्तरे नाट्यसिद्धान्तपरकशास्त्रस्य रचनं न जातं भवेत् । जातं चेत् कालकबलितं वा तत् स्यात् । यद्यपि भवभूते: पूर्ववर्त्तिन: आचार्या: भामह-दण्डि-वामनादय आसन् काव्यशास्त्रकारा:, परं तैस्तु अलङ्कारगुणदोषादितत्त्वेषु प्राधन्यं प्रदत्तं न नाट्यतत्त्वेषु । एतेन निश्चीयते यत् नाट्यतत्त्वपरकं पूर्णं शास्त्रं केवलं नाट्यशास्त्रमुपलब्धमासीत् यदवलम्ब्य नाटकानि लिख्यन्ते स्म । तयैव रीत्या रूपकत्रितयस्य

रचनाकाले नाट्यशास्त्रोक्तनियमाः भवभूतिना अधीताः स्युरिति वक्तुं शक्यते । अतः मालतीमाधव-महावीरचरित-उत्तररामचरितानां त्रयाणां रचनाकाले नूनं कविना नाट्यशास्त्रोक्ता सरणी अनुसृता भवेत् । यतः पदवाक्यप्रमाणज्ञः भवभूतिः अनुशासनहीनः नाट्यकार इति स्वीकर्त्तुं न शक्यते । तदत्र विविच्यते ।

**(क) उत्तररामचरिते अङ्गी रसः**

भवभूतेः उत्तररामचरितं यदा नाट्यतत्त्वनिकषेण परीक्ष्यते तदा तत्र नैके दोषा उद्भाव्यन्ते समीक्षकैः । तद्यथा -

(क) नाटकेऽत्र विदूषकाभावः ।

(ख) नाटकेऽत्र नदीनां वनदेव्याः च नटीरूपेण उपस्थापनम् ।

(ग) चन्द्रकेतुलवयोः युद्धाधिक्यवर्णनम् ।

(घ) करुणरसस्य अङ्गित्वस्वीकरणम् ।

किञ्च कविरयं नाटकेऽत्र करुणरसस्य अङ्गित्वं स्वीकृत्य आद्यन्तं तस्यैव उपस्थापनं समधिकं कृतवानस्ति, यद्यपि साहित्यदर्पणे "एक एव भवेदङ्गी शृङ्गारः वीर एव वा" (६/१०) इत्यादिः नियमः कृतो वर्त्तते । तद्वत् दशरूपके धनञ्जयेनाऽपि "एको रसोऽङ्गीकर्त्तव्यो वीरः शृङ्गार एव वा"[४] इत्थमुदाहृत्य प्राञ्चः वदन्ति यत् स्थितेऽपि अङ्गिरसनियमे भवभूतेः करुणस्य अङ्गित्वग्रहणमनुचितं भवति । अतः कवेरयं दोषः ।

एवं वदतः प्रति प्रष्टव्यम् । किमाद्यजन्मा परजन्मानमनुसरेत् ? परजन्मा पूर्वजन्मानं वा ? अत्रोत्तरं द्वितीयकं साधु । तस्मात् धनञ्जयस्य दशरूपककारस्य समयः दशमशताब्दी साहित्यदर्पणकारस्य विश्वनाथस्य च समयः चतुर्दशशताब्दी । भवभूतिस्तु अष्टमशताब्दीयः । अतः कथमसौ दशरूपकं साहित्यदर्पणं वाऽऽश्रित्य नाटकं कुर्यात् ? अनया दिशा उत्तररामचरितस्य समीक्षां कुर्वन्तः नैके .कविं दूषयन्तः "निरङ्कुशाः कवय"इत्युक्त्वा समादधति। परं नैतदुचितम् । प्रकृतं तु उत्तररामचरितं नाट्यशास्त्रनियमानुकूलं कविना कृतम् । अतः तयैव रीत्याऽत्र नाटकं समीक्ष्यते न धनञ्जय-रामचन्द्र-गुणचन्द्र-विश्वनाथादीनां शास्त्रानुसारम् ।

अङ्गिरसप्रसङ्गे विचार्यते चेत् तर्हि नाट्यशास्त्रं परिशीलनीयम् । तद्दृष्ट्या नाटकं नानारसभावचेष्टितं भवेत् । निर्वहणे रसः अद्भुतः भवेत् [५] । नाट्यशास्त्रस्य विंशाध्याये नाटकलक्षणं तेन कृतमस्ति । न क्वापि अङ्गिरसप्रसङ्गः उट्टङ्कितोऽस्ति । नाटकं रसभावयुक्तं स्यादिति तन्मतिः । अतः खलु उत्तररामचरिते करुणरसस्य अङ्गित्वे बाधा वा क्व ? लक्षणशास्त्रस्य नाट्यशास्त्रस्य नाटकनियममनुसृत्य भवभूतिना लक्ष्यं नाटकं रचितम् । अतोऽसौ नीतिवादी कविः । तदर्थं खलु **उत्तरे रामचरिते भवभूतिर्विशिष्यते** इति उक्तिः तस्य नाट्यकोविदत्वं ख्यापयति ।

**(ख) उत्तररामचरिते धर्मी**

नाट्यनिष्पादनतत्त्वानि एकादश भवन्तीति मुनिः प्रतिपादयति । नाट्यसंग्रहनाम्ना तानि व्यपदिश्यन्ते । तद्यथा -

रसा भावा ह्यभिनयाः धर्मी वृत्तिप्रवृत्तयः ।
सिद्धिः स्वरास्तथातोद्यं गानं रङ्गश्च संग्रहः [१५] ।।

नाट्यस्य कृते एते विषया आवश्यिकाः । एतेषु धर्मी इति कश्चन महत्त्वपूर्णो विषयः । धर्मी नाम इतिकर्त्तव्यता इति अभिनवगुप्तः ।[१६] रङ्गमञ्चे कस्या अपि कलाया उपस्थापनं धर्मीद्वारा क्रियते । सा द्विविधा । तदुक्तम् -

लोकधर्मी नाट्यधर्मी धर्मीति द्विविधः स्मृतः ।[१७] तत्र लोकधर्मी नाम सा यत्र नाट्यकारः लोके सञ्जातानां व्यवहाराणां स्वाभाविकं शुद्धमविकृतं च विषयम् अङ्गलीलाविवर्जितं रङ्गे प्रदर्शयति । अयमत्र सारो यत् लोकधर्म्यां व्यावहारिकं जगत् यथा तथा प्रदर्श्यते ।

परं नाट्यधर्मी भिन्ना भवति । अत्र लोकव्यवहारः नाट्यकलया भिन्नं रूपं प्रापन् प्रदर्श्यते। अवश्यं तत्स्वरूपं सत्यसमन्वितं भवति । एतल्लक्षणं मुनिना व्यापकतया त्रयोदशाध्याये उक्तम् ।[१८] तत्राद्यद्वयं यथा -

अतिवाक्यक्रियोपेतमतिसत्त्वातिभावकम् ।
लीलाङ्गहाराभिनयं नाट्यलक्षणलक्षितम् ।।
स्वरालङ्कारसंयुक्तमस्वस्थपुरुषाश्रयम् ।
यदीदृशं भवेन्नाट्यं नाट्यधर्मी तु सा स्मृता ।।

अत्र प्रथमपद्ये व्यवहृतपदचतुष्टयस्य व्याख्यामभिनवगुप्तपादानुसारमुपस्थापयामः । यथा अतिवाक्यक्रियोपेतं नाम इतिहासादिवाक्यमतिक्रम्य या उचितरञ्जकेतिवृत्तकल्पनात्मिका क्रिया। यथा राजशेखरेण रामनिर्वासनार्थं दशरथवेषराक्षसविरचिततत्त्वकल्पना, तथा यदुपेतम् । अस्यायं सामान्योऽर्थः भवति यत् इतिहासपुराणादिभ्यः कथा तु गृह्यते नाट्ये, परं तत्र जनरञ्जनार्थं क्वचित् कल्पनात्मकं दृश्यमपि उपस्थाप्यते । अतिसत्वातिभावकं नाम सत्वं (भावं) स्वभावं चित्तवृत्तिञ्च अतिक्रम्य कविकल्पितचित्तवृत्त्यन्तरयुक्तं स्यात् । पात्राणां स्वभावेऽपि कविकल्पित-चित्तवृत्तिः दृश्येत नाट्यधर्म्याम् । एवंभूतमभिनयं नाट्यलक्षणलक्षितं कृत्वा लीलायाः शोभाप्रधानतया मनोहरा ये अङ्गहारा तत्प्रधानैरभिनयैः उपेतं भवेत् नाट्यम् ।

उत्तररामचरितस्याध्ययनं प्रसङ्गेऽस्मिन् क्रियमाणे नाट्यधर्मी प्राप्नोतीति ज्ञातव्यं भवति। अत्र अतिवाक्यक्रियोपेतं दृश्यते । यद्यपि उत्तररामायणमाश्रित्य भवभूतिना नाटकमिदं लिखितं तथापि प्रथमाङ्के चित्रप्रदर्शनप्रसङ्गे तृतीयाङ्के छायासीतावतारणप्रसङ्गे सप्तमाङ्के गर्भाङ्कप्रदर्शनद्वारा अन्ते सीतारामयोः मिलनप्रसङ्गे तमसादीनां नदीनाममूर्त्तानां मूर्त्तरूपेण

चित्रणप्रसङ्गे वा कविः भरतोक्तं नाट्यधर्मीसिद्धान्तं पालयति । तथैव अतिसत्वातिभावकमत्र नाटके विलोक्यते । राज्ञः रामस्य पत्नीं विना अतिशयमूर्च्छावर्णना (उ.च.३ अङ्के), शान्तचित्तस्य संयमिनः राजर्षेः जनकस्य एकदा क्रोधाधिक्यात् रामेण सह अयोध्यायाः भस्मसात्कर्त्तुमुद्यतवर्णना (उ.च. ४ अङ्के), चन्द्रकेतोः शत्रुं लवं दृष्ट्वाऽपि विरोधो विश्रान्तः ... (उ.च. ५ अङ्कः) इतीत्थं कथनमित्यादिकं सर्वं कविकल्पितचित्तवृत्तेः निदर्शनं नाट्यधर्म्याः लक्षणलक्षितमस्ति ।

एवमपि नाट्यस्य यदन्यल्लक्षणं प्रायः तत्सर्वमपि उत्तररामचरिते सङ्गच्छते । तत्राङ्गिकाद्यभिनयशोभावर्धनार्थं पात्रेषु अङ्गहारादिपरिधापनार्थं कविना कारितम् । रसानुरूपं भावानुरूपमवस्थानुरूपमत्र परिदधति पात्राणि अलङ्कारान् । तत्र रामस्य शम्बूकवधकाले राजवस्त्रधारणं खड्गधारणादिकं यदा वर्ण्यते तथैव चन्द्रकेतोः सैनापत्ये राजकीयवस्त्रधारणमपि कारयति । वाल्मीकिशिष्यः लवस्तु अन्तेवासिरूपं धारयति, तथैव सुमन्त्रस्य (उ.च.५ अङ्के) सारथिवेशः । सर्वमेतत् नाट्यधर्मीतां निभालयति । अपि च लोकप्रसिद्धं द्रव्यं यदा नाट्ये प्रयुज्यते तदा मूर्त्तिमत् रूपं करोति इति नाट्यधर्मीस्वरूपम् ।[१९] अत्र नाटके मुरला-तमसा-गङ्गा-गोदावरीनदीनां वनदैवतायाः वासन्त्याः मूर्त्तिरूपेण मानवाकारेण उपस्थापनं कविना यत् कृतं तत्राक्षेपः न करणीयः नाट्यशास्त्रोक्तसिद्धान्तानुकूलत्वात् । अपि च नाट्यधर्मी नाम साऽस्ति यत्र पर्वत- यान- विमान- चर्म - वर्म - आयुध - ध्वजाः मूर्त्तिमन्त इव प्रयुज्यन्ते ।[२०] उत्तररामचरितस्य तृतीयाङ्के विमानेने शम्बूकवधात् प्रतिनिवृत्तः रामः पञ्चवट्यां प्रविशन् यदा पूर्वं सीतापरिपालितस्य गजशावकस्य विपत्तिं वासन्तीमुखात् श्रुणुते तदा विमानं सम्बोधयन् ब्रूते - "विमानराज ! अत्रैव स्थीयताम् ।[२१] एतत् श्रुत्वा पुष्पकविमानं तत् जीवव्यवहारवत् तत्र तिष्ठति । इत्थं विमानस्यापि मूर्त्तत्ववर्णनात् नाटकस्य नाट्यधर्मीत्वं सिद्ध्यति । अपि च नाट्यधर्मी सा यत्र ब्रह्मणा देवमानवसन्तोषार्थम् इतिहासपुराणवेदेभ्यः अर्थः उदाहृतोऽस्ति । अतः रामायणकथापुरुषस्य रामस्य उत्तरकालीनजीवनवर्णनादत्र कथा नाट्यधर्मलक्षणयुताऽस्ति । नाट्यधर्म्यां सदाऽङ्गाभिनयमनुसरेत् । अङ्गस्यार्थत्रयं गीत - आतोद्य - अभिनयरूपमस्ति। अन्ते भरतमुनिः वदति यदा नाट्यस्य विषयानुसारं जीवानां भावः आङ्गिकाभिनयः अलङ्काराः चेष्टाश्च प्रवर्त्तन्ते तदा सा नाट्यधर्मी भवति ।[२२] उत्तररामचरिते प्रस्तावनायां सूत्रधारकथनात् "भो भोः ! यदा तावदत्रभवतः ... महाराजरामस्यायं पट्टाभिषेकसमयः रात्रिन्दिवमसंहत-नान्दीकः... [२३] इत्यस्मात् कविः गीतं वाद्यम् अभिनयं च प्रयुङ्क्ते इति प्रमाणितं भवति ।

प्रोक्तविमर्शनात् नाट्यधर्मीलक्षणं यद्भरतेनोक्तं तदत्र नाटके भवभूतिना समाश्रितमिति दृष्टम् ।

**(ग) उत्तररामचरिते गतिः**

नाट्यशास्त्रस्य द्वादशाध्याये गतिप्रसङ्गः चर्चितः । मनुष्याणां नृपाणां कथं देवगतिरिति मुनीनां प्रश्नमुत्तरयन् मुनिस्तु आह -

देवांशजास्तु राजानो वेदाध्यात्मसु कीर्त्तिताः ।
एवं देवानुकरणे बोधो ह्यत्र न विद्यते ।[२४]

एतदनुसारम् उत्तररामचरिते राज्ञः रामस्य देवांशरूपेण चित्रणं कृतमस्ति । अतः आकाशमार्गे मनुष्यस्य तस्य पुष्पकविमानेन आगमनं समर्थ्यते । पुष्पकं "विमानराज ! अत्रैव स्थीयताम्"[२५] इति रामस्य उक्त्या विमानस्य तत्र स्थगनमपि न चित्रम् । नाट्यधर्म्यामेतत् सम्भवतीति समर्थ्यते मुनिवचसा । अत्रापि रामस्य राज्ञः देवांशत्वेन देवप्रभावात् विमानस्यादेशपालनं न आश्चर्यकरम् । तद्वत् रामस्यादेशं सीतारक्षणरूपं गङ्गापृथिव्यौ पालितवत्यौ । सप्तमाङ्के एतत् ते देव्यौ स्वीकुरुतः ।[२६] देवीरूपिण्योः गङ्गापृथिव्योः मानवस्यादेशपालनमयुक्तिकरमपि राजा देवो भवतीति मुनिमतानुसारं देवस्य रामस्य कथा ताभ्यामङ्गीकृता इत्यनेन न किमपि अकिञ्चित्करम् ।

भयानकरसे पात्राणां गतिः कीदृशी इत्यस्मिन् प्रसङ्गे वदता मुनिना स्त्रीणां कापुरुषाणामधमानां च गतिः निरूपिता । तस्यामवस्थायां प्रवेपितशरीरं भवति तेषाम् । शुष्कोष्ठः स्खलन्ती गतिः च दृश्यते ।[२७] उत्तररामचरिते यदा सीता चित्राणि पश्यति तदा लक्ष्मणेन प्रदर्शितस्य जामदग्न्यस्य चित्रं दृष्ट्वा वेपते । सा भयभीता सती "कम्पिताऽस्मि" इति कथयति ।[२८] अस्मात् ससम्भ्रमं सीताप्रकम्पनं तत्रापि कवेरित्थमुपस्थापनं मुनिकृतशास्त्रानुकूलं सिद्ध्यति ।

पुनश्च लक्ष्मणप्रदर्शितानि निजसंवद्धानि परिवारसंवद्धानि च चित्राणि दृष्ट्वा परिश्रान्ता सीता शयनाय स्वामिनमवलम्बते । रामस्य कण्ठे सीता बाहुद्वयं स्थापयति । पुनः स्वामिनः बाहुमुपबर्हरूपेणाश्रित्य स्वपिति ।[२९] अत्र चिन्तनीयम् । शयनं मञ्चे निषिद्धमिति अङ्कलक्षणे विश्वनाथकविराजः यद्यपि कथयति,[३०] परं नाट्यशास्त्रे अङ्के निषिद्धप्रत्यक्षविषयप्रसङ्गे तथा न निर्दिष्टमस्ति ।[३१] अवश्यं चतुर्विंशाध्याये एकत्र रङ्गे निषिद्धकार्यप्रसङ्गे शयनं न विधातव्यमिति वदन्[३२] पुनरग्रे तत्रैव यद्वा **शयीतार्थवशादेकाकी सहितोऽपि** वा इति उक्त्वा [३३] प्रयोजनानुसारं शयनं वर्णनीयमिति परामृशति । तदर्थमुत्तररामचरिते सीतायाः रङ्गे शयनविषयवर्णनं न दोषाय। अपि च गतिप्रकरणे शयनावस्थायाः स्थितिरपि वर्णिता । तेन शयनस्य प्रदर्शने मुनिमतमस्तीति प्रमाणितम् । उत्तररामचरिते सीता रामस्य हस्तमुपधानीकृत्य स्वपितीति वर्णनया नाट्यशास्त्रोक्तम् उद्वहितं शयनं लक्ष्यते । तल्लक्षणं यथा-

हस्तोपरि शिरः कृत्वा कूर्परक्षोभमेव च ।
उद्वाहितं तु विज्ञेयं लीलया वेशने विभोः ।।[३४]

अतः भवभूतिना नाट्यशास्त्रोक्तशयनविधिरनुसृत इति प्रमाणितं भवति ।

**(घ) उत्तररामचरिते आहार्याभिनयः**

नेपथ्यरचनाविधानं भवति आहार्याभिनयः ।[३५] वेशभूषातः पात्रस्य पात्रत्वमनुमीयतेऽनेन। उत्तररामचरिते आहार्याभिनयोऽपि प्रदर्शितः । तत्र पतिविरहिण्याः सीतायाः रूपं वेशभूषां च तमसा यथा वर्णयति **परिपाण्डुदुर्बलकपोलसुन्दरम्** .....[३६] इत्यादिकं,तस्मात् आहार्याभिनयः सूच्यते । तथैव विरहिणः रामस्य शरीरावस्था सीतया "**प्रभातचन्द्रमण्डलापाण्डुरपरिक्षाम-दुर्बलाकारेण**...[३७] इतीत्थं वर्णिता । नटानां वेशभूषां दृष्ट्वा वर्णना पात्रैः तथा क्रियते । अतः आहार्याभिनयः कविनाऽपि अनुसृत इति वक्तुं शक्यते ।

**(ङ) उत्तररामचरितं मिलनान्तं नाटकम् अद्भुतरसान्वितञ्च**

रामायणमुपजीव्य लिखिते उत्तररामचरिते सीतारामयोर्मिलनमन्तिमाङ्के कथं भवभूतिना कृतमिति आक्षिपन्ति केचन समीक्षकाः । यतः रामायणदृशा सीतायाः अन्तिमे वसुन्धराक्रोडगमनं प्रसिद्धमेव । अतः प्रसिद्धप्रस्थानस्य व्यतिक्रमं कविः किमर्थमकरोदिति विचिकित्सा । परन्तु नाट्यशास्त्रदृशा विवेचनेन नैषः दोषः कवेरिति वक्तुं शक्यते । यतः कस्यामपि दशायां मरणं नैव वर्णनीयमिति कथ्यते । तदुक्तम् -

"अप्राप्तौ यानि काम्यस्य वर्जयित्वा तु नैधनम्"

इति उच्यते ।[४१] अतः सीतां विना रामस्य, रामं विना सीतायाः विरहस्तु वर्ण्यते । परं कामदशायाः अन्तिमावस्था मरणमिति नैव वर्णनीयं कदापि । अतः खलु भवभूतिना नाट्यनियमपालनपूर्वकं दर्शकाणां विक्षिप्तं मनः सान्त्वयितुं नाटकस्यान्तिमे अद्भुतं च किमपि वस्तु योजयितुं नायिकानायकयोः मिलनमकारि । अतो भूषणमिदं न तु दूषणमिति वक्तुं शक्यते ।

इत्थं नाट्यशास्त्रस्य बहुषु नाट्यतत्त्वेषु अङ्गिरस-प्रस्तावना-धर्मी-गति-आहार्य-वाचिक-अन्तिमाङ्काद्भुतरसतत्त्वादीनि कानिचन आदाय उत्तररामचरितं समीक्षितम् । समीक्षणेन इदमेव वक्तव्यं भवति यत् भवभूतिः न निरङ्कुशः कविः । अपि तु नाट्यस्य संविधानपरकं शास्त्रं नाट्यशास्त्रमनुसृत्यैव उत्तररामचरितस्य रचनमकरोदित्यस्मात् वक्तुं शक्यते । तदर्थम् "**उत्तरे रामचरिते भवभूतिर्विशिष्यते**" इत्युक्तिः तस्य वैशिष्ट्यं प्रकाशयति।

शोधपत्रमिदं समाजोपकारकम् । तच्च प्रजावत्सलस्य रामचन्द्रस्य राज्यशासनं रामादिवत् प्रवर्त्तितव्यं न रावणादिवत् इति ज्ञानप्राप्तिः । कवयः ख्यातवृत्तात् कल्पिताद्वा विषयं स्वीकुर्वन्तु नाम परं तदपि नाट्यशास्त्रनिकषेण परीक्षितं भवेत् । विवाह - युद्ध-वधादिविषयाः नाट्ये न प्रदर्शनीयाः । अन्यथा सामाजिकाः सद्यः तत् सर्वमनुकरिष्यन्ति। तया दृष्ट्या नाटकमप्येतत् परिशीलितम् ।

जीवस्य प्रत्येकं कर्म नियमानुसारि भवेत् । तेन यशः सुखं चापि । नाटकनियमाः

नाट्यरचनाकर्मणि अवश्यं पालनीया: । तेन समाजस्य लाभ: अन्यथा हानि: । प्रस्तुत: शोधनिबन्ध: तथा शिक्षयति ।

अत: शोधपत्रस्यास्य सामाजिकसन्दर्भे प्रयोजनीयता विद्यते ।

*उपाचार्य:*
*स्नातकोत्तरसाहित्यविभागस्य*
*श्रीजगन्नाथसंस्कृतविश्वविद्यालयस्य*
*पुरीस्थस्य ।*

**सन्दर्भसूची -**

१. नाट्यशास्त्रका इतिहास, पृ. १०३ ।
२. उत्तररामचरितस्य प्रस्तावना, सम्पादक - श्रीनिवासमिश्र, पृ. १३-१४
३. संगृहीतम्, नाट्यशास्त्रका इतिहास, पृ. ८७ ।
४. दश. तृतीयप्रकाश:, कारिका ३३ ।
५. नाट्याशास्त्रम् २०/१०, ११,१२, १३, १९, ३९, ४६ ।
१५. ना.शा. ६/१० ।
१६. संगृहीतम्, नाट्य.विश्व. तृतीयभाग:, पृ. ८७२
१७. ना.शा. ६/२४ ।
१८. ना.शा. १३/७०,७१ ।
१९. तत्रैव, १३/७२- ८२ ।
२०. ना.शा.- १३/७५ ।
२१. उ.च. ३ अङ्क:. पृ. १६ ।
२२. ना.शा. १३/८५ ।
२३. उ.च. प्रथमाङ्क:, पृ. १५ ।
२४. ना.शा. १२/२८ ।
२५. उ.च. ३, अङ्क, पृ. १६ ।
२६. तत्रैव, सप्तमाङ्के, पृ. ३६१ ।
२७. ना.शा. १२/७३ ।
२८. उ.च. प्रथमाङ्क, पृ. ५२ ।
२९. तत्रैव, पृ. ९२ ।
३०. सा.द. ६/१७ ।
३१. ना.शा. २०/२०-२८ ।
३२. ना.शा. २४/२९५ ।
३३. ना.शा. २४/२९६ ।
३४. तत्रैव १२/२५३ ।
३५. ना.शा. २३/२ ।
३६. उ.च. ३/४, ५ ।
३७. उ.च. प्रथमाङ्क: पृ. ९४, ९५ ।
४१. ना.शा. २४/१९१ ।

# श्रीजगन्नाथाष्टके काव्यतत्त्वम्

डॉ. मितालिमधुच्छन्दा सेनापतिः

श्रीजगन्नाथाष्टकम् इति नामधेयग्रन्थः सुदर्शनाचार्येण प्रणीतः । अस्मिन् ग्रन्थे रसारलाङ्कारादिकाव्यत्त्वं समुचितरूपेण सुसज्जितं शोभते । तदत्र यथासामथ्यम् आलोच्यते।

रसः -

काव्यस्य प्राणभूतपदार्थः रसः। अतः तैत्तिरीयोपनिषदि रसशब्दः परमात्मरूपत्वेन प्रतिपादितः। यथा - "रसो वै सः । रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति" जीवः।[१] तम् एव रसं लब्ध्वाऽऽआनन्दी भवति। रसरूपी, रसास्वादी च स एव परमात्मैवेति।

रसः काव्यस्य आत्मा इति आलंकारिकाणां सिद्धान्तः। तदुक्तं विश्वनाथकविराजेन साहित्यदर्पणे "वाक्यं रसात्मकं काव्यम्"[२] इति। रसस्य अष्टविधत्वं भरतमुनिना स्वीकृतम्। यथा - "शृङ्गारहास्यकरुणरौद्रवीरभायानकाः।

विभत्सादभुतसंज्ञौ चेत्यष्टौ नाट्ये रसाः स्मृताः।।"[३]

"रस्यते आस्वाद्यते इति रसः" इति व्युत्पत्त्या अष्टौ पदार्थाः रसपदवाच्याः भवन्ति। ते च यथा - (१) रसः (२) भावः (३) रसाभासः (४) भावाभासः (५) भावोदयः (६) भावभान्तिः (७) भावसिद्धिः (८) भावशवलता चेति।

भाव इत्युक्ते कः पदार्थः इति जिज्ञासायां[४] साहित्यदर्पणे उक्तमस्ति -

"सञ्चारिणः प्रधानानि देवादिविषया रतिः।
उद्बुद्धमात्रस्थायी च भाव इत्यभिधीयते।।"

देवादिविषया रतिः भावः इति उच्यते।

अलङ्कारविवेचनम् - भामहमते अलङ्कारलक्षणम् -

"न कान्तमपि निर्भूषं विभाति वनिताननम्।" इति।

अर्थात् अलङ्कारान् विना स्त्रीणां रूपं यथा न विभाति तथैव काव्ये अलङ्कारान् विना काव्यसौन्दर्यं नागच्छति। विश्वनाथकविराजस्य मते -

"शब्दार्थयोरस्थिरा ये धर्माः शोभातिशायिनः।
रसादीनुपकुर्वन्तोऽलंकारास्तेऽङ्गदादिवत्।।"[५] इति ।

अर्थात् यथा लोके देहिनां शरीरावयवेषु परिहिता अङ्गदादयः शरीरशोभां वर्धयन्तः आत्मनः शरीरिणः उत्कर्षं प्रतिपादयन्ति, तथैव शब्दार्थशरीरस्य काव्यस्य उत्कर्षकाः अलङ्काराः

शब्दार्थमयशरीरमलंकृत्य काव्यस्य आत्मभूतस्य रसस्य उत्कर्षतां प्रतिपादयन्ति।
अतिशयोक्त्यलङ्कारस्य लक्षणम् -

"सिद्धत्वेऽध्यवसायस्यातिशयोक्तिर्निगद्यते।
भेदेऽप्यभेद: सम्बन्धेऽसम्बन्धस्तद्विपर्ययौ।
पौर्वापर्यात्यय: कार्यहेत्वो: सा पञ्चधा तत:।।"[६] इति।

अध्यवसायस्य सिद्धत्वे सति अतिशयोक्तिरलङ्कार: भवति। उपमेयस्य निगरणं कृत्वा उपमानेन सह अस्य अभेदज्ञानम् अतिशयोक्तिरलङ्कार: भवति। विषयस्य वा उपमेयस्य निगरणे विषयिण: उपमानस्य वा अध्यवसाय-(अभेदारोप)-कथनमयममलङ्कार:।
प्रकृतिचित्रणम् -

अस्मिन काव्ये श्रीसुदर्शनाचार्य: प्राकृतिकसौन्दर्य्यविषये वर्णयति। महोदधे: उत्पन्नवीचि: कथं समुद्रगर्भे लीना भवति तस्मिन् विषये वर्णयति। यथा -

"यथा वीचिश्रेणी सलिलनिधिजा स्फीततनुका
पुनस्तस्मिन् लीना भवति समये नैव कियता।
तथा सृष्टा पृथ्वी पुनरपि च यस्मिन् प्रविशति।
स नीलाद्रिस्थायी सुगतिशुभदायी भवतु मे।।"[७] इति।

अस्मिन् काव्ये वरेन्द्रादिपञ्चतीर्थक्षेत्रविषयेऽपि वर्णना विद्यते। महाप्रसाद-महादीप-वडदाण्ड-वडपण्डाविषयेषु वर्णनाऽस्ति। स्वर्गद्वारस्य महनीयताविषये कवि: चित्रयति।
यथा- "चिताभस्माच्छन्नं मनुजगणशेषाश्रयपदम्
श्मशानं वन्धुनां नयनसलिलैरार्द्रमनिशम्।
अहो स्वर्गद्वाराभिधीमह च यत् सन्निधिगतम्
स नीलाद्रिस्थायी विमलमतिदायी भवतु मे।।"[८] इति।

अपि च मुक्तिमण्डपकल्पवृक्ष-आनन्दविपणीप्रभृतीनां विषये कवि: वर्णयति।
समाजं प्रति उपादेयता -

श्रीजगन्नाथाष्टोत्तरशतककाव्ये समाजं प्रति कथम् उपादेयतथ्यं प्रतिपादितम् अस्ति तस्मिन् विषये कवि: वर्णयति। भगवान् श्रीजगन्नाथ: स्वयमजोऽपि मानवप्रीतिनिमित्तं धरायाम् अवतरन् मानवीयलीलां करोति। नानामतालम्बिनाम् आगमनं विश्वजनीनजगन्नाथसंस्कृते: श्रेष्ठत्वं प्रख्यापयति कृष्ण-गौर-पीतवर्णधारिण: मानवा: निवसन्ति इति कवि: वर्णयति।
यथा -

"क्षितौ पीतश्वेतासिततनुबहा लोकनिवहा
वसन्तीति ज्ञात्वाऽसितवपुरहो धारयति य:।

सितङ्गं यद्भ्राता किलयदनुजा पीतरुचिताम्

स नीलाद्रिस्थायी शुभविभवदायी भवतु मे।।"[९] इति।

एतेन ज्ञायते यत् जगन्नाथबलभद्रसुभद्राः क्रमानुसारं तत्तद्वर्णान् धारयन्तः जगत्पालनकर्त्तृत्वं प्रदर्शयन्ति।

---

**सन्दर्भाः**

१. तैत्तिरीयोपनिषद् २-१-७

२. साहित्यदर्पणः- प्रथमपरिच्छेदः - पृ-२४

३. नाट्यशास्त्रम् - ६.१४

४. साहित्यदर्पणः- तृतीयपरिच्छेदः - श्लोक-२६०

५. साहित्यदर्पणः- दशमपरिच्छेदः - श्लोक -१

६. स एव - १०.४६

७. श्रीजगन्नाथाष्टोत्तरशतकम् - श्लोक-५४

८. तदेव - श्लोक-५८

९. तदेव - श्लोक-६५

**सहायकग्रन्थाः -**

१. १०८ उपनिषद् - (सरल ओडिशा भावार्थः देवमूर्तितपोनिष्ठ पण्डित श्रीरामशर्मा आचार्यः। भगवतीदेवीशर्मा, श्रीवेदमातागायत्रीद्रष्ट - शान्तिकुञ्जः, हरिद्वारम् (उत्तराकण्ड)), जगन्नाथप्रेसेस्, अगरपडा, कटक, प्रथमसंस्करण - २०१६।

२. नाट्यशास्त्रम्, भागः-३, सम्पा- रविशङ्करनागरः, परिमलपब्लिकेशन, दिल्ली, संस्करणवर्षम् - १९८६।

३. श्रीजगन्नाथाष्टोत्तरशतकम् - पण्डितसुदर्शनाचार्यः नोवल्प्रिण्टर्स, पुरी, प्रथमसंस्करण-१९९०।

४. साहित्यदर्पणः - विश्वनाथकविराजः, चन्द्रकलासंस्कृत- हिन्दीव्याख्योपेतम्। व्याख्याकारः- आचार्य्य शेषराजशर्मारेग्मी, चौखम्बाकृष्णदास अकादमी, वाराणसी, चौखम्बाप्रेस्, वाराणासी, संस्करण-पुनर्मुद्रितः, २०१६।

—०—

*अध्यापिका, मुकुन्दपात्रस्नातकमहाविद्यालयः,*

*बलरामपुरम्, याजपुरम् ।*

# योगलक्षणं तत्स्वरूपञ्च

डॉ.अशोककुमारमीना

'हिरण्यगर्भो योगस्य वक्ता नान्य: पुरातन:'[१] इति वचनानुसारं योगशास्त्रस्य प्रथमप्रवक्तृरूपेण भगवत: हिरण्यगर्भस्य नामोल्लेख: प्रसिद्ध: । श्रुतिस्मृतीतिहासपुराणादिष्वपि योगस्य समुल्लेख: दृश्यत इति कृत्वा योगशास्त्रस्यानादिता सिद्ध्यति । एतेन भगवान् पतञ्जलि: योगशास्त्रस्य कर्त्ता कथं भवेदिति शङ्काया: समाधानार्थं सूत्रकारेण महर्षिपतञ्जलिना स्वयमेव ग्रन्थादौ 'अथ योगानुशासनम्'[२] इति सूत्रमुक्तम्। अत्र 'अथ' शब्दोऽयमधिकारार्थे उद्दिष्ट:, सत्स्वपि मङ्गलानन्तरारम्भाद्यर्थान्तरेषु । योगशब्द: समाध्यर्थे उद्दिष्ट: । तत्र 'युज्' धातो: 'घञ्'प्रत्यये योगशब्द: निष्पद्यते । 'युज्'धातो: रूपत्रयं पाणिनीयव्याकरणशास्त्रे दृश्यते । (क) युज्-समाधौ दिवादिगणीयात्मनेपदी (ख) युजिर्-योगे रुधादिगणीय उभयपदी, (ग) युज्-संयमने चुरादिगणीय: परस्मैपदी। एवं रूपत्रयाणां धातूनामर्थभिन्नत्वे सति तत्र योगशब्दस्यार्थ: समाध्यर्थे योगार्थे संयमनार्थे चोद्दिष्ट: । सांख्ययोगदर्शनशास्त्रयो: योगशब्दस्यार्थ: समाधिसंयमनार्थपरकत्वेन परिलक्ष्यते । तथा योगभाष्ये 'योग: समाधि: स च सार्वभौमश्चित्तस्य धर्म' इति । अनुशासनशब्दश्च अनादिकालाद् गुरुशिष्यपरम्परादागतस्य योगशास्त्रस्य वाचक: प्रसङ्गेऽस्मिन् योगस्य लक्षणं भेद: साधनं फलञ्चेति रूपेणानुबन्ध-चतुष्टयानां परिचयोऽपि वृत्तिकारेण प्रदत्त: ।

पातञ्जलयोगदर्शने महर्षिपतञ्जलि: योगस्य लक्षणं प्रतिपिपादयिषया प्रवृत्ते समाधिपादे 'योगश्चित्तवृत्तिनिरोध:'[३] इति । सूत्रगत 'निरोध' पदस्यार्थं न तु वृत्तीनां नाश: अभावो वा प्रत्युत वृत्तीनां स्वस्वाधिकरणे लय: । वृत्तिनिरोध: चित्तस्यावस्था-विशेष: । योगदर्शने निष्पन्न: योगशब्द: समाध्यर्थक:। परन्तु क: समाधि: ? येन योग: सिद्ध्यतीति चेत्, तत्रोक्तं सूत्रकारेण–

१. 'अथ योगानुशानम्' इति ।
२. 'योगश्चित्तवृत्तिनिरोध:' इति ।
३. 'तदा द्रष्टु: स्वरूपेऽवस्थानम्'[४] इति ।

अत्र तृतीयसूत्रस्थ 'तदे'ति पदात् चित्तवृत्तिनिरोधलक्षणविशिष्ट: योग: सिद्ध:। येन द्रष्टु: स्वस्वरूपेऽवस्थानं कैवल्यलाभो वा जायते । अनेनैतत्सिद्धं भवति यत् मोक्षप्रदश्चित्तवृत्तिनिरोधरूप: समाधि: योग इति । यदि चित्तवृत्तिनिरोधरूपसमाधिमाध्यमेन मोक्षलाभ: कैवल्यलाभो वा न जायते अर्थात् जीवात्मन: स्वचिन्मात्रस्वरूपेऽवस्थानं न जायते तर्हि तादृश: चित्तवृत्तिनिरोध: समाधिमात्रमिति कथ्यते, न तु योग: । यद्यपि प्रत्येकं योग: समाधिपदवाच्य:, तथापि सर्वप्रकारक: समाधि: योग इति नैव वक्तुं शक्यते । तत्र केचन विशिष्टा: समाधय: योगपदवाच्या: भवन्तीति ।

**योगसुधाकरवृत्तिः—**

अत्र अथ-शब्दः आरम्भार्थः मङ्गलार्थश्च । युज्-समाधौ इति धातोः योगः समाधिः। तस्यानुशासनं हिरण्यगर्भशास्त्रमनुसृत्य शिष्यते, व्याख्यायते स साधनः सफलः समाधिरनेनेत्यनुशासनं शास्त्रम् । तथा च कस्मै चित्तकैवल्य कामाय प्रतिपाद्य योगप्रतिपादकं शास्त्रमारभ्यतित्यक्षरात् । तत्र समाधिः द्विविधः सम्प्रज्ञात: असम्प्रज्ञातश्चेति । स च चित्तस्य धर्मः, चित्तं हि त्रिगुणात्मकत्वात् पञ्चभूम्योपेतं तत्र भूमयश्च क्षिप्तं मूढं विक्षिप्तम् एकाग्रं निरुद्धमिति तत्र रजसा विशेषोऽक्षिप्यमाणं क्षिप्तम्, तमसा निद्रालस्यादि वृत्तिं मूढम् । ईषद् जस्तमः संस्पृष्टं न सत्वेन कदाचित् ध्यानयुक्ततया क्षिप्तादिविशिष्टं विक्षिप्तम्, विद्युत् रजस्तमो मलेन शुद्धसत्वेनैकाग्रमेकतानम्, प्रशान्तसफलचित्तैकं संस्कारशेषं विरुद्धम् ।

**चित्तस्वरूपम्—**

सत्त्वगुणप्रधानात्मकं चित्तं (बुद्धिः) प्रकृत्याः प्रथमकार्यम् । अतः त्रिगुणात्मकं तत् । गुणवैषम्यात् त्रिगुणात्मके चेतसि भिन्नभिन्नाः परिणामाः दृश्यन्ते । चित्तस्य पञ्चभूमयः शास्त्रकारसम्मताः क्षिप्त-मूढ-विक्षिप्त-एकाग्र-निरुद्धभेदात् ।

रजोगुणस्य प्रभावात् यदा चित्तं शब्दादिबाह्यविषयेषु निरन्तरं भ्रमति दैत्यदानवादिवत् चित्तं निरन्तरं सांसारिकविषयं प्रति धावति च सैवावस्थाचित्तस्य क्षिप्तावस्थायोगसाधनायामनुपयुक्ता । तमोगुणस्य समुद्रेकेण चित्तं मूढत्वमिति । राक्षसपिशाचादिवत् आलस्य-दीनता-भ्रम-निद्रा-मोह-वैषयिकज्ञानानामस्पष्टतादि-वशात् किं कर्तव्यविमूढः सन् कामक्रोधादिना वशीभूतः सन् अकार्ये रतो भवति मूढावस्थासम्पन्नः मनुष्यः । निद्रावस्थायां चित्तभूमिः 'मूढ' इत्युच्यते । विक्षिप्तावस्थायां सत्त्वगुणस्याधिक्येऽपि रजोगुणस्याधिपत्यं न भवति सम्पूर्णतया विनष्टम् । अस्यामवस्थायां चित्तं सामयिकभावेन कस्मिन्नपि विषये स्थिरम्, तथापि परवर्त्तिनि समये तस्य विषयान्तरगमनम् । देवतादिवत् अनया चित्तवृत्त्या स्थायिचित्तसंयमः नैव सुलभः । अतः इयमपि चित्तवृत्तिः न योगसाधनानुकूला । विशुद्धसत्त्वगुणस्योद्रेके ध्येयरूपैकविषयनिविष्टं चित्तमेकाग्रनाम्ना प्रथितम् । एकाग्रतायाः परिपक्वावस्थायां सम्प्रज्ञातयोगस्य चरमपरिणामरूपधर्ममेधसमाधिसिद्धिः, या खलु यथार्थतत्त्वज्ञानात्मिका प्रारब्धकर्मफलभोगक्षयपूर्वकं कैवल्यस्य हेतुः । चित्तस्यान्तिमा सर्वोत्कृष्टा अत्यन्तं विलक्षणा ज्ञानशून्यावस्था निरुद्धावस्था या खलु केवलं संस्काररूपा । सर्वासामपि वृत्त्यन्तराणां निरोधानन्तरमस्याः समुत्पत्तिः । एकाग्रचित्तभूमौ वपितं सम्प्रज्ञातयोगस्य बीजं निरुद्धभूमौ असम्प्रज्ञातयोगरूपेण पल्लवितं पुष्पितञ्च भवति, येन मोक्षरसास्वादेन समर्थो भवति साधकः।

पतञ्जलिकृतयोगलक्षणविषये इयं शङ्का जायते यदि वृत्तिमात्रनिरोधः योग उच्यते तर्हि ध्येयाकाराक्लिष्टवृत्तिरहिते सम्प्रज्ञातयोगे योगलक्षणं न सङ्गच्छते । एवं च यदि किञ्चिद्वृत्तिनिरोधः योग उच्यते तर्हि क्षिप्तमूढविक्षिप्ताद्यवस्थात्रये यत्किञ्चिद् वृत्तिनिरोधसत्त्वेऽपि योगपदेन तस्याभिधानं स्यात् । अस्याः शङ्कायाः निवारणार्थं वाचस्पतिमिश्र-विज्ञानभिक्षु-नागेशभट्टादयः योगस्य परिष्कृतलक्षणं प्रस्तौतुं प्रयतन्ते ।

वाचस्पतिमिश्रेण व्यासभाष्यस्य प्रथमव्याख्याकारेण 'क्लेशकर्म-विपाकाशयपरिपन्थित्वे सति चित्तवृत्तिनिरोधत्वम्' इति योगलक्षणं कृतम् । चित्तस्यैकाग्रतावस्थासम्पन्नः वृत्तिनिरोधः क्लेशादीनां परिपन्थी । एकाग्रे चेतसि सत्त्वगुणस्योद्रेके सति चित्तं ध्येयाकारपदार्थचिन्तने स्थिरं भवति । अभ्यासपूर्वकमेकाग्रतायाः वृद्धिद्वारा सर्वस्मिन् विषये अपरोक्षज्ञानमुत्पद्यते साधकस्य । योगसम्मतषड्विंशतिपदार्थानां यथार्थज्ञानेन अविद्यादिपञ्चक्लेशानां तन्निमित्तककर्मबन्धनानाञ्च शिथिलतापूर्वकमन्तिमे चित्तवृत्तयोऽपि निरुद्धाः भवन्ति ।

अतः सम्प्रज्ञातसमाधिकाले सम्पन्नः वृत्तिनिरोधः क्लेशादीनां परिपन्थी । चित्तस्य क्षिप्तमूढविक्षिप्तावस्थाकालिकवृत्तिनिरोधः न योगपदवाच्यः । एतास्ववस्थासु अस्मितारागद्वेषप्रधानचित्तवृत्तीनां परिणामः प्रचलति येन भिन्नभिन्नकर्मसम्पादनद्वारा कर्माशयाणामुत्पत्तिवशादस्मिन्जन्मनि कर्मजन्य-फलोपभोगस्य परिसमाप्त्यसम्भवात् निश्चितकालपर्यन्तं भिन्नभिन्नयोनिधारण-स्यावश्यकता तिष्ठति ।

'योगश्चित्तवृत्तिनिरोधः' इति सूत्रे योगलक्षणं न स्पष्टं प्रत्युत 'तदा द्रष्टुः स्वरूपेऽवस्थानम्' इति तृतीयसूत्रे हेतूपन्यासपूर्वकं 'द्रष्टुः स्वरूपावस्थितिहेतुश्चित्तवृत्तिनिरोधो योगः' इति लक्षणम् आचार्यविज्ञानभिक्षु-सम्मतम् । अयमाशयः द्रष्टुः स्वरूपावस्थितेः हेतुभूतः चित्तवृत्तिनिरोधः योग इति । यस्मिन् चित्तवृत्तिनिरोधे द्रष्टा पुरुषः साक्षात् परम्परया वा औपाधिकसुखदुःखभोगरहितः सन् अनौपाधिकशुद्धचैतन्यस्वरूपे प्रतिष्ठितः भवति स योग इत्युच्यते । सम्प्रज्ञातसमाधिद्वारा साक्षात्कृतचतुर्विंशतितत्त्वं प्रति अनात्मबुद्धिपूर्वकं परिशेषे विवेकज्ञानं प्रत्यपि वैराग्यबुद्ध्युत्पत्त्या असंप्रज्ञातयोगस्य हेतुभूतस्य परवैराग्यस्योत्पत्तिर्जायते, येन स्वस्वरूपेणावस्थानं करोति पुरुषः । एवं सम्प्रज्ञातयोगः असंप्रज्ञातयोगस्य कारणम् । क्षिप्ताद्यवस्थात्रयेषु चित्तस्यैकाग्रताया अभावाद् व्यत्थिते चेतसि निरुद्धावस्थायाः असम्भवात् पुरुषस्य स्वरूपावस्थानं न सम्भवति।

बृहद्योगसूत्रवृत्तिकारेणाचार्यनागेशभट्टेन वाचस्पतिमिश्र-विज्ञानभिक्षु-प्रस्तुतयोगलक्षणस्वीकारपूर्वकं तस्य लक्षणस्य निर्दुष्टत्वमपि प्रतिपादितम् । तेन आचार्यविज्ञानभिक्षु-कृतयोगस्य परिष्कृतलक्षणे 'आत्यन्तिक' पदप्रयोगद्वारा सर्ववृत्तिनिरोधरूपप्रलये समग्रसुषुप्तौ च योगलक्षणस्यातिव्याप्तिः निवारिता । प्रलये समग्रसुषुप्तौ च चित्तवृत्तयः निरुद्धाः भवन्ति, यत्र पुरुषस्य स्वस्वरूपेऽवस्थानं सम्भवति । परन्तु पुरुषस्य इयं स्वरूपावस्थितिः न आत्यन्तिकी । अतः तस्याः आत्यन्तिकस्वरूपावस्थितेः हेतुभावः प्रलयकालिकः समग्रसुषुप्तिकालिकश्च । सर्ववृत्तिनिरोधः न योग इत्युच्यते ।

**चित्तवृत्तिनिरूपणम्—**

सांख्ययोगशास्त्रे चित्तस्य वृत्त्यात्मकपरिणामः स्वीक्रियते । चित्तवृत्तयः ज्ञानस्य भिन्नभिन्नावस्थाभेदाः ज्ञानात्मकपरिणामाः भवन्ति । प्रमा अप्रमाभेदेन ज्ञानं द्विविधम् ।

परन्तु प्रमाणविपर्ययादिभेदेन चित्तवृत्तय: पञ्च । विषयाणामानन्त्यात् विषयसापेक्षचित्तवृत्तय: यद्यप्यसंख्या: तथापि पञ्चचित्तवृत्तिषु सर्वेषामपि वृत्तीनामन्तर्भाव: सूत्रकाराभिप्रेत:।

क्लिष्टाऽक्लिष्टभेदेन वृत्तय: भागद्वयेन विभक्ता: । चेतसि रजस्तमसो: बाहुल्येन क्लिष्टात्मकप्रमाणादिवृत्तीनामुत्पत्ति: सात्त्विकदशायाञ्चाक्लिष्टात्मक-प्रमाणादिवृत्तीनामुत्पत्ति:। क्लिष्टवृत्तीनां प्रादुर्भावे चित्तं चञ्चलं व्यथितञ्च भवति । परन्त्वक्लिष्टवृत्तिकाले शान्तस्वभावसम्पन्नं चित्तं सुखमनुभवति। क्लिष्टचित्तवृत्ति: अविद्यादिक्लेशमुत्पादयति, आध्यात्मिकादित्रिविधदु:खं प्रददाति, सञ्चित-प्रारब्ध-क्रियमाणादिकर्मफलमुत्पादयति च येन योगसाधनायां बाधा समुत्पद्यते । अपरपक्षे अक्लिष्टचित्तवृत्ति: गुणाधिकार-विरोधिनी, योगसाधनायां सहायिका । अनया आत्मस्वरूपप्रकाशनपूर्वकं प्रकृतिपुरुषयो: विवेकख्यातिरुत्पद्यते साधकस्य । अतोऽक्लिष्टचित्तवृत्तिद्वारा दु:खदायिनी-क्लिष्टवृत्ते: निरोध: सम्भवति। परन्तु मुमुक्षूणां कृते गुणात्मकाक्लिष्टवृत्तीनामपि निरोध आवश्यक:। तस्यापि निरोधे सर्ववृत्तिनिरोधरूपा सम्प्रज्ञातसमाधि-सिद्धिपूर्वकं जीवन्मुक्तावस्थायां तिष्ठति साधक: । शरीरपातानन्तरं विदेहमुक्तिं प्राप्नोति स: ।

**१. प्रमाणवृत्ति:—** प्रमाणवृत्ति: विपर्ययादिवृत्तिचतुष्टयनामाधारभूता । 'प्रमीयतेऽनेनेति प्रमाणम्' इति व्युत्पत्त्या येन प्रमात्मकज्ञानमुत्पद्यते तत्प्रमाणम् । तज्जन्यज्ञानं च प्रमा । पातञ्जलयोगशास्त्रे प्रमाणानां संख्या निर्धारिता वर्त्तते[५] । प्रत्यक्षप्रमाणमनुमानप्रमाणं शब्दप्रमाणञ्चेति भेदेन । एतस्मात् क्रमश: प्रत्यक्ष-अनुमिति-प्रमाशब्दप्रमा चोत्पद्यते । प्रमाणवृत्तिमतिरिच्य विपर्ययादिवृत्तिद्वारा अनधिगतबाधितार्थविषयताया अभावात् प्रमा नोत्पद्यते । 'असन्दिग्धा विपरीतानधिगतविषयाचित्तवृत्तिरेव प्रमाणम्' । अत: अतिप्रसिद्धत्वात्प्रमाणस्य लक्षणं वृत्तिकारेण पृथग्रूपेण न कृतम्। तन्मते विरोधरहितज्ञानं प्रमाणमिति । प्रत्यक्षादिप्रमाणत्रयेणैव प्रमाज्ञानं जायते । अत: विपर्ययादीनां प्रमाणरूपेण नैव स्वीकृति: । सांख्ययोगशास्त्रयो: प्रमा पुरुषनिष्ठ: भवतीति कृत्वा पौरुषेयबोधनाम्ना प्रसिद्ध:, यस्य तु इन्द्रियज्ञानेन लिङ्गज्ञानेन पदज्ञानेन चोत्पत्ति: सम्भवति ।

विषयाकाराकारितचित्तवृत्ति: पौरुषेयबोधं प्रति कारणम् । चित्तस्य विषयाकारपरिणाम एक एव पद्धतिरिति पातञ्जलयोगदर्शनस्य सर्वे व्याख्याकारा: स्वीकुर्वन्ति। वृत्तिकारमतेनाऽपि इन्द्रियसहायतया बाह्यवस्तुसम्बन्धेन चित्तस्य विषयविषयकसामान्यविशेषस्वरूपविशिष्टपदार्थस्य विशेषरूपगुणक्रियारूपाकार-परिणामादिनिर्णयात्मिका मुख्यवृत्ति: प्रत्यक्षं प्रमाणम् ।

अनुमानं व्याप्तिमूलकपर्वतादिपक्षे विद्यमानाग्न्यादिसाध्यस्य लिङ्गज्ञानसहायतया सामान्यरूपविषयकचित्तवृत्ति: । तत: अनुमानं सामान्यावधारणप्रधानावृत्तिरित्युच्यते। वाक्यार्थज्ञानोत्पन्नचित्तवृत्ति: आगमप्रमाणमिति । अत: चित्तवृत्तिरेव सर्वत्र प्रमाया: करणं भवतीति कृत्वा प्रमाणमित्युच्यते ।

**२. विपर्ययवृत्तिः—** विपर्ययो नाम मिथ्याज्ञानम्। विपर्ययवृत्तौ वस्तुनः वास्तविकस्वरूपाभिव्यक्तिः न भवति । अतः विपर्ययज्ञानद्वारा वस्तुविषयकयथार्थज्ञानं न सम्भवति । यथा- नेत्रसम्बन्धीयकामलादि-रोगग्रस्तजनस्य सूर्यकिरणेन दूरस्थशुक्तेः रजतवत्प्रतीतिर्जायते, येन तस्य 'अहं रजतज्ञानवान्' इति बोधः उत्पद्यते । परन्तु उत्तरकालीकयथार्थज्ञानेन अस्य बाधः सम्भवति । वृत्तिकारमतेन अयथार्थपदार्थे यथार्थरूपविषयकज्ञानं विपर्ययः । यथा शुक्तौ रजतज्ञानम् । पदार्थस्य यत् वास्तविकस्वरूपं तद्रूपेणाप्रतिष्ठमततद्रूप्रतिष्ठम् । अर्थात् विपर्ययकाले पदार्थस्य यथार्थस्वरूपं नैव प्रकटी भवति । अयथार्थस्वरूपे विद्यमानत्वात् 'अयं स्थाणुर्वा पुरुषो वा' इति संशयज्ञानं विपर्ययः।

**३. विकल्पवृत्तिः—** विकल्पात्मिका वृत्तिः शब्दज्ञानानुपातिनी वस्तुशून्यविषयिणी च। 'गगनकुसुमम्' इत्यादिशब्दानां श्रावणप्रत्यक्षेण जायमानालीकपदार्थविषयकज्ञानं विकल्पवृत्तिरिति । विकल्पवृत्तिजन्यज्ञानं विपरीतबुद्ध्या नैव बाध्यते । विपरीतबुद्ध्यनन्तरमपि विकल्पात्मकव्यवहारः प्रचलति । यथा 'गगनकुसुमलीक'मिति विपरीतबुद्धिसद्भावेऽपि 'गगनकुसुमम्' इति शब्दस्य श्रवणमात्रे तद्विषयकविकल्पात्मकज्ञानं जायते । यथा वा 'बन्ध्यापुत्र आगच्छतीति वाक्यश्रवणेन बन्ध्यापुत्ररूपविषयस्याभावेऽपि शब्दश्रवणजन्या या चित्तवृत्तिरुदेति । सा विकल्पवृत्तिरिति । वृत्तिकारमतेन शब्दश्रवणजन्यज्ञानानुगमकं यत् पदार्थस्य वास्तविकस्वरूपानपेक्ष्यमाण-निश्चयात्मकज्ञानं विकल्पज्ञानाविकल्प इत्युच्यते, यथा 'चैतन्यं पुरुषस्य स्वरूपम्' । वस्तुतः 'चैतन्यमेव पुरुषः' तदा किमत्र केन व्यपदिश्यते ? तथापि चैतन्यं पुरुषस्य स्वरूपमित्याकारिका चित्तवृत्तिः 'चैत्रस्य गौ'रितिवत् उत्पद्यते।

**४. निद्रावृत्तिः—** जाग्रत्स्वप्नसुषुप्तिभेदेन चित्तस्य (जीवस्य) अवस्थात्रयं स्वीक्रियते। जाग्रत्समये स्वप्नकाले चोत्पद्यमानानां प्रमाणविपर्ययविकल्पसंज्ञकचित्तवृत्तित्रयाणां स्वरूपनिर्द्धारणानन्तरं सुषुप्तिकालिकनिद्रावृत्तिविषये विचारः कृतः सूत्रकारेण। सत्त्वादिगुणानां कार्यरूपेण चेतसि ज्ञानं प्रवृत्तिः जडतायाः चाविर्भावः जायते । जडता नाम अज्ञानम् । रजोगुणयुक्तसत्त्वगुणस्य प्राधान्यकाले चेतसि जाग्रदवस्थायां स्वप्नावस्थायाञ्च प्रमाणादिवृत्तयः उत्पद्यते । एताः वृत्तयः घटपटादि-वास्तविकपदार्थरूपेण शशशृङ्गाद्यलीकपदार्थरूपेण च जायन्ते । परन्तु निद्रावृत्तौ प्रमाणादिवृत्तीनामभावस्य हेतुभूतमज्ञानं तिष्ठति । अस्मिन् समये चित्तस्य द्वारभूतानि चक्षुरादीन्द्रियाणि तमोगुणेनावृतानि भवन्ति, येन बाह्यविषयेण सह चित्तस्य सम्बन्धाभावे चित्तस्य बाह्यविषयाकारपरिणामः न सम्भवति ।

वृत्तिकारमतेन अभावज्ञानस्याश्रयभूतावृत्तिः निद्रा । तमोगुणस्याधिक्यात् विषयाणां परित्यागपूर्वकं वृत्तिर्जायते अस्मिन् समये । परन्तु जाग्रदवस्थायाः पुनः स्मृतिदर्शनादनुभवं विना स्मृतेरभावात् निद्रावृत्तिः सिद्ध्यतीति ।

**५. स्मृतिवृत्तिः—** प्रमाणादिवृत्तीनामनुभवजन्यसंस्कारेण स्मृतिवृत्तिरुत्पद्यते।

अत अन्तिमे स्मृतिवृत्तेः वर्णनम् । प्रमाणादिवृत्तयः सदैव न तिष्ठन्ति । तृतीयक्षणे एतासां विनाशः जायते । परन्तु ज्ञानजन्यसंस्कारः प्रसुप्तावस्थायां चेतसि तिष्ठति। कालान्तरे उद्बोधसामग्रीसहायतया उद्बुद्धः भवति सः । चित्तस्य एवंविधः परिणामः स्मृतिवृत्तिरित्युच्यते । स्मृतिवृत्त्या पूर्वानुभूतपदार्थज्ञानं स्मर्यत एव । प्रत्यक्षाद्यनुभवजन्यसंस्कारानन्तरं स्मरणज्ञानमुत्पद्यते । अतः स्मरणज्ञानस्य साधनभूतस्मृतिवृत्तेः अन्तिमे वर्णनमुचितमेव ।

'अनुभूतविषयासम्प्रमोषः स्मृतिः'[६] इति स्मृतिवृत्तेर्लक्षणमुक्तं सूत्रकारेण, यत्र व्यासदेव-वाचस्पतिमिश्र-भोजदेवादिव्याख्याकाराणां मत्यैक्यं वर्त्तते ।

चित्तं सरित्तुल्यम् । तस्य वृत्तिरूपा द्विविधा धारा विद्यते । एका अन्तर्मुखीधारा कल्याणकारिणी मोक्षप्रदायिनी च, अपरा बहिर्मुखीधारा संसारदायिनी । चित्तनद्यः तीव्रविषयप्रवाहः प्रथमतः वैराग्यद्वारा अवरोधः सन् पश्चादभ्यासद्वारा विवेकोन्मुखी भवति। अतः समाधिसम्पादने उभयोः अभ्यासवैराग्ययोः समानरूपेण हेतुत्वं विद्यते, न तु वैकल्पिकरूपेण । केवलमभ्यासेन वैराग्येण वा केवलं चित्तवृत्तेर्निरोधो न सम्भवति । अत एव सूत्रकारेण 'अभ्यासवैराग्याभ्याम्'[७] इति रूपेण इतरेतरद्वन्द्वसमासः स्वीकृतः, न तु 'चार्थे द्वन्द्वः' इति सूत्रे विकल्पार्थे द्वन्द्वसमासः गृहीतः । तथाचोक्तं भगवता श्रीकृष्णेन श्रीमद्भगवद्गीतायाम्–

असंशयं महाबाहो ! मनो दुर्निग्रहं चलम् ।
अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते ।।[८] इति ।

---

**सन्दर्भाः सहायकग्रन्थाश्च**

१.योगवार्त्तिकम् - १५.५ ।
२.योगसूत्रम् - १.१ ।
३.तदेव- १.२ ।
४.तदेव- १.३ ।
५.तदेव- १.७ ।
६.तदेव - १.११ ।
७.तदेव- १.१२ ।
८.भगवद्गीता ६.३५ ।

—०—

*सहाचार्यः सांख्ययोगविभागाध्यक्षश्च*
*केन्द्रीयसंस्कृतविश्वविद्यालयः*
*श्रीसदाशिवपरिसरः, पुरी, ओडिशा*

# समासशक्तिविचार:

डाँ. सङ्कर्षणपण्डा

"समास:" इत्याख्योऽयं शब्द: समुपसर्गपूर्वकात् सत्तार्थक "अस्" इति धातो: समसनमिति व्युत्पत्तौ "भावे"[१] इत्यनेन सूत्रेण भावे घञ् प्रत्यये कृते सति निष्पद्यते। समस्यतेऽनेकं पदमिति विग्रहे "अकर्तरि च कारके संज्ञायाम्"[२] इत्यनेन सूत्रेण कर्मणि घञ् प्रत्यये सति, तथा च समस्यतेऽस्मिन्निति व्युत्पत्तौ "हलश्च"[३] इत्यनेन अधिकरणे, कर्त्तरि वाहुलकाद् वा घञ्प्रत्यये च कृते समासशब्द: सिद्ध्यतीति। तत्र समसनं समास:[४]। समसनं नाम संक्षिप्तीकरणमित्यर्थ:। अनेकस्य पदस्य एकपदीभवनं समास:। "समर्थ: पदविधि:"[५] इति सूत्रवलात् पदविधे: समर्थाश्रितत्वं प्रयोजनम्। पदानां विधि: पदविधि:, स च समासादि:। सूत्रस्य वृत्तौ भट्टोजिदीक्षितेन उक्तं यत्– पदसम्बन्धी यो विधि: स समर्थाश्रितो बोध्य:[६] इति। तत्र सामर्थ्यं द्विविधं व्यपेक्षालक्षणमेकार्थीभावलक्षणञ्चेति। समर्थाश्रितपदस्य समासो भवति। अत उक्तं सुपद्मव्याकरणे "समर्थानां समास:" इति। समासलक्षणविषये शब्दशक्तिप्रकाशिकाकारेण उक्तं यत्–

यादृशस्य महावाक्यस्यान्तस्त्वादि निर्जार्थिके।
यादृशार्थस्य धीहेतु: स समासस्तदर्थक:।। इति।

राज्ञ: पुरुषत्वमत्र त्वप्रत्ययान्तपदं सम्पूर्णवाक्यस्य अर्थं न प्रतिपादयति। अतोऽत्र न समास: परन्तु राजपुरुषत्वमित्यत्र सम्पूर्णार्थस्य बोधकत्वात् समासो भवति। सारस्वतव्याकरणेऽपि समासे विभक्तेर्लोपे सति लुप्तविभक्ति: तस्यार्थं न त्यजति। उक्तञ्च–

विभक्तिर्लुप्यते यत्र तदर्थस्तु प्रतीयते।
ऐकपद्यं पदानां च स समासोऽभिधीयते।।[७] इति।

सम्वन्धयुक्तपदस्य समासो भवति। अतएव "बृद्धस्य वचनं ग्राह्यम्" इत्यादौ "बृद्धस्य" इति पदेन सह "वचनम्" इत्यस्य सम्वन्धत्वात् समासो भवेत् किन्तु "ग्राह्यम्" इत्यनेन सम्वन्धाभावात् न समास:।

अयं समास: षड्विधो भवति। उक्तञ्च कौण्डभट्टेन –

सुपां सुपा तिङा नाम्ना धातुनाऽथ तिङां तिङा।
सुबन्तेनेति च ज्ञेय: समास: षड्विधो बुधै:।।[८] इति।

क्रमेणोदाहरणानि –

सुपां सुपा – अत्र सुवित्यनेन तदन्तविधिना सुबन्तपदमेव गृह्यते। तेन सुबन्तस्य सुबन्तेन सह समासो भवतीति सिद्ध्यति। यथा – राजपुरुष: इति। अत्र "राज्ञ:" इति सुबन्तस्य "पुरुष:" इति सुबन्तेन समं समास:।

सुपां तिङा – सुबन्तेन सह तिङन्तस्य समासो भवत्यत्र। किञ्चात्र पूर्वपदं सुबन्तमुत्तरपदञ्च तिङन्तमिति। यथा-पर्यभूषयत् अनुव्यचलत् इत्यादि। पूर्वोक्तोदाहरणद्वये परि, अनु इति पदद्वयेन यथाक्रमम् अभूषयत् व्यचलत् (वि अचलत्) इति तिङन्तपदद्वयस्य समासो भवति। अनु, परि, वि, इत्येतद्त्रयमेव गतिसंज्ञकं भवति। अत: "गतिमतोदात्तवता तिङापि समास:" इति वार्तिकेन अत्र समासो जायते।

सुपां नाम्ना – अत्र सुबन्तस्य नाम्ना अर्थात् प्रातिपदिकेन सह समासो जायते। साधारणतया पदयो: पदानां वा मध्ये एव समासो परिलक्ष्यते सर्वत्र। किन्तु क्वचित् सुबन्तेन केवलं नामपदस्य समासो भवति। तद्यथा– कुम्भकार:। अत्र कुम्भ ङस् कार इत्यवस्थायामेव "उपपदमतिङ्" इत्यनेन समासो भवति। अयं तावदुपपदसमास: इति कथ्यते। अत्र "गतिकारकोपपदानां कृद्भि: सह समासवचनं प्राक्सुबुत्पत्ते:"[९] इति परिभाषा ज्ञापकं भवति। अस्या: परिभाषया "उपपदमतिङ्"[१०] इति सूत्रे अतिङ् ग्रहणमेव प्रकृतांशे ज्ञापकमिति। अत्र कश्चित् विशेष: –

केवलं उत्तरपदे एव सुबुत्पत्ते: प्राक्समासो भवति। अन्यथा चर्मक्रीती इत्यादौ पूर्वपदस्य चर्मन् इत्यस्य प्रातिपदिकत्वे नलोपापत्ति: स्यात्

सुपां धातुना – सुबन्तस्य धातुना समास:। अत्र पूर्वपदं सुबन्तमुत्तरपदं च केवलं धातु:। यथा – कटं प्रवते इति कटप्रू:। कट इति सुबन्तं गत्यर्थक: प्रुङ् इति धातु:। प्रुङ् इत्यस्माद् क्विविति भवति। क्विप: सर्वापहारित्वाल्लोपेन धातुमात्रमुत्तरपदमिति भाव:। अत्र अन्येभ्योऽपि दृश्यते इति सूत्रस्थेन "क्विब्बचिप्रच्छ्यायतस्तूकटप्रूजुश्रीणां दीर्घश्च"[११] इति वार्तिकबलात् निपातनात् समास:।

तिङां तिङा – तिङन्तस्य तिङन्तेन सह समास:। अर्थात् अत्र पदद्वयमेव तिङन्तं भवति। यथा - "पिवतखादत" इति। पिवत खादता इति सततं यस्यां क्रियायामभिधीयते सा पिवतखादत इत्यर्थ:। "आख्यातमाख्यातेन क्रियासातत्ये" इति मयूरव्यंसकाद्यन्तर्गतगणसूत्रात्समास: सिद्ध्यति।

तिङां सुपा – अत्र तावत्तिङन्तस्य सुबन्तेन सह समासो दृश्यते। एवञ्च पूर्वपदं तिङन्तमुत्तरपदं च सुबन्तमिति बोध्यम्। उहरणमित्थम्- "जहिस्तम्ब:" इति। अत्र "जहि" इति तिङन्तस्य "स्तम्ब" इति सुबन्तेन सह समास:। स्तम्बं जहि इति आभीक्ष्ण्येन य आह स जहिस्तम्ब इति। स्तम्बीघातकर्ता इति समासार्थ:। अत्र "जहि कर्मणा बहुलमाभीक्ष्णे कर्तारं चाभिदधाति" इति मयूरव्यंशकाद्यन्तर्गतगणसूत्रात् समास:। अयं षड्विधोऽपि समास: "सह सुपा" इत्यत्र योगविभागेन भाष्ये व्युत्पादित: शब्दकौस्तुभादौ वर्णितश्च।

समासे कदाचित् पूर्वपदार्थस्य, कदाचित् उत्तरपदार्थस्य, कदाचित् अन्यपदार्थस्य, कदाचित् उभयपदार्थस्य च प्राधान्यं भवति। अव्ययीभाव:, तत्पुरुष:, बहुब्रीहि:, द्वन्द्वश्चेति समास: चतुर्विध:। अयं प्रायोवाद:। न तु सार्वत्रिक:। उक्तञ्च कौण्डभट्टेन –

समासस्तु चतुर्द्धेति प्रायोवादस्तथा परः।
योऽयं पूर्वपदार्थादिप्राधान्यविषयः स च।।
भौतपूर्व्यात्सोऽपि रेखागवयादिवदास्थितः। इति।[१२]

उपर्युक्तेषु समासभेदेषु भूतपूर्वः, दृम्भूः, आयतस्तूः, वागर्थाविव इत्यादीनां समासवाक्यानां अन्तर्भावो नास्ति। अतः प्रायोवाद इत्युच्यते।

प्रायेण पूर्वपदार्थप्रधानोऽव्ययीभावः। अस्मिन् अव्ययीभावलक्षणे "प्रायेण" इति पदं यदि न स्यात् केवलं "पूर्वपदार्थप्रधानोऽव्ययीभावः" इति लक्षणस्वीकारे "उन्मत्तगङ्गम्" इति अव्ययीभावसमासे उन्मत्ता गङ्गा यस्मिन् देशे इत्यर्थेऽव्ययीभावसमासेऽन्यपदार्थप्राधान्याद् बहुब्रीहिसमासः प्राप्नोति। "प्रायेण" इति पदोपपादनात् अन्यपदस्य प्राधान्येऽपि बहुब्रीहिसमासं प्रबाध्य अव्ययीभावसमासो भवति।

सूपप्रति – सूपस्य लेशः इति विग्रहे उत्तरपदप्राधान्येऽपि तत्पुरुषं प्रवाध्य अव्ययीभावसमासो भवति। किञ्च "अर्धपिप्पली"-पिप्पल्या अर्धम् इति विग्रहे अत्र तत्पुरुषसमासे पूर्वपदस्य "अर्धम्" इत्यस्य प्राधान्येऽपि नायम् अव्ययीभावसमासः। किञ्च "पूर्वकायः" इत्यादौ "कायस्य पूर्वम्" इति तत्पुरुषसमासे पूर्वपदस्य प्राधान्येऽपि प्राप्तमव्ययीभावं प्रवाध्य तत्पुरुषोसमासो भवति। किञ्च "द्वित्रा" इत्यादौ द्वौ वा त्रयो वा इति बहुब्रीहिसमासे उभयपदस्य प्राधान्येऽपि द्वन्द्वसमासं प्रवाध्य बहुब्रीहिसमासो भवति। एवञ्च "शशकुशपलाशम्" इत्यादौ शशश्च कुशश्च पलाशश्च एषां समाहार इति समाहारद्वन्द्वसमासे अन्यपदस्य प्राधान्येऽपि बहुब्रीहिसमासं प्रबाध्य द्वन्द्वसमासो भवति। सिद्धान्ते तु "अव्ययीभावाधिकारपठितत्वमव्ययीभावत्वम्" इत्यादि लक्षणं तत्पुरुषादिष्वपि विज्ञेयम्। प्राचीनानां लक्षणं न केवलं अव्याप्ति-अतिव्याप्तिपरकमपितु असंभवदोषपरकम्। अतः पूर्वपदार्थप्रधानोऽव्ययीभाव इति लक्षणस्थाने अव्ययीभावाधिकारपठितत्त्व-मव्ययीभावत्वमङ्गीकारे तत्र न कश्चित् दोषः। एवमेव तत्पुरुषादिष्वपि लक्षणेऽङ्गीक्रियमाणे दोषो नास्ति। इयं समासवृत्तिः जहत्स्वार्थाऽजहत्स्वार्थेति भेदेन द्विविधा। तत्र जहत्स्वार्थाऽजहत्स्वार्थपक्षयोः एकर्थीभाव-व्यपेक्षारूपयोः पर्यवसानं लभ्यते।

उक्तञ्च – जहत्स्वार्थाजहत्स्वार्थे द्वे वृत्ती ते पुनस्त्रिधा।
भेदः संसर्ग उभयं वेति वाच्यव्यवस्थितेः।।[१३]

जहति पदानि स्वार्थं यस्यां सा जहत्स्वार्था अथवा अवयवार्थनिरपेक्षत्वे सति समुदायार्थबोधिकात्वं जहत्स्वार्थात्वम् । जहत्स्वार्थात्व नाम एकार्थीभावः।

न जहति पदानि स्वार्थं यस्यां सा अजहत्स्वार्था। अयमेव व्यपेक्षापक्षे मतान्तरेण भाष्यकारैरुक्तः। समासादिपञ्चसु विशिष्टे एव शक्तिः न तु अवयवे। रथन्तरं, सप्तपर्णः, शुश्रूषेत्यादौ अवयवार्थानुभवाभावात्। अतएव भाष्ये व्यपेक्षापक्षमुद्भाव्य "अथैतस्मिन्

व्यपेक्षायां सामर्थ्ये योऽसावेकार्थीभावकृतो विशेष: स वक्तव्य:" इति। व्यपेक्षावादिनां नैयायिक-मीमांसकादीनां मते "राजपुरुष:" इत्यादौ न शक्ति:। तत्र आकांक्षादिवशात् विशिष्टार्थबोध:। राजपुरुष इत्यादौ राजपदादे: सम्भन्धिनि लक्षणया एव राजसम्वन्धि अभिन्न: पुरुष इति बोध:। वैयाकरणा: समासादिषु समुदाये एव शक्ति: न तु अवयवे।

उक्तञ्च – समासे खलु भिन्नैव शक्ति: पङ्कजशब्दवत्
बहूनां वृत्तिधर्म्माणां वचनैरेव साधने।
स्यान्महद्गौरवं तस्मादेकार्थीभाव आश्रित:।[१४]

अत: समासे पङ्कजशब्दवत् अतिरिक्ता शक्तिरिति। व्यपेक्षारूपा एकार्थीभावरूपा च शक्तिर्द्विधा। तत्र स्वार्थपर्यवसायिनां शब्दानामाकाङ्क्षादिवशाद् परस्परं य: सम्बन्ध: सा व्यपेक्षा। सा च वाक्ये एव। समासादिर्वृत्तौ तु एकार्थीभावरूपं सामर्थ्यं स्वीक्रियते न तु व्यपेक्षारूपं सामर्थ्यम्। उक्तञ्च - चकारादिनिषेधोऽथ बहुव्युत्पत्तिभञ्जनम्।
कर्तव्यं ते न्यायसिद्धं त्वस्माकं तदिति स्तिति:।।[१५]

ये समासावृत्तिं न स्वीकुर्वन्ति तेषां मते घटश्च पटश्चेति घटपटौ इति द्वन्द्वे साहित्यद्योतनार्थं प्राप्तस्य चकारप्रयोगस्य लोप: कर्त्तव्य:। एकार्थीभावस्थले पृथगुपस्थित्यभावाद् "उक्तार्थानामप्रयोग:" इति न्यायाद् चकारप्रयोगस्य प्राप्तिरेव नास्ति।

उपसंहार: –

"सापेक्षत्वेऽपि गमकत्वात् समास:" इति न्यायेन यदि सर्वत्र गमकत्वात् समास: तदा "समर्थ: पदविधि:"[१६] इति सूत्रे समासवारणाय समर्थग्रहणमनर्थकं स्यात्। नियमोऽयं न सार्वात्रिक:। उक्तञ्च – प्रतियोगिपदादन्यद् यदन्यत् कारकादपि।
वृत्तिशब्दैकदेशस्य सम्वन्धस्तेन नेष्यते।।

अत एव "ऋद्धस्य राजमातङ्गा:" इत्यत्र समासो न भवति। उक्तञ्च -
चैत्रस्य दासभार्येयं लूनचक्रोरथो मया
शरै: शातितपत्रोऽयं वृक्ष इति सतां मतम्।
तरुणी वृषलीभार्य: प्रवीरं पुत्रकाम्यति
ऋद्धस्य राजमातङ्गा इति न स्यु: कदाचन।। इत्यलं विस्तरेण।

---

**सन्दर्भा:**

१. अष्टाध्यायी, पा. सू. - ३.३.१८।
२. तत्रैव, पा. सू. - ३.३.१८।
३. तत्रैव, पा. सू. - ३.३.२१
४. लघुसिद्धान्तकौमुदी, पृ. सं. २१

५. अष्टाध्यायी, पा. सू. - २.१.१
६. सिद्धान्तकौमुदी(मूलमात्रम्) पृ. सं. -७१
७. सारस्वतव्याकरणम्, पृ. सं. -२३□
८. वैयाकरणभूषणसार:, पृ. सं.-२३१
९. परिभाषेन्दुशेखर:, परि. सं.-७६
१०. अष्टाध्यायी, पा. सू. २.२.१९
११. अष्टाध्यायी, पा. सू. ३.२.१
१२. वैयाकरणभूषणसार:, पृ. सं.-२३४
१३. तत्रैव, पृ. सं. २३४
१४. तत्रैव, पृ. सं. २४१
१५. वैयाकरणभूषणसार:, का. सं.-३३
१६. अष्टाध्यायी, पा. सू. २.१.१

परिशीलितग्रन्थसूची -

१). पाणिनीय अष्टाध्यायीसूत्रपाठ: सम्पादक:-पं सत्यनारायणशास्त्री खण्डुडी, कृष्णदास अकादेमी, वारणसी– २०१२।
२). वैयाकरणसिद्धान्तकौमुदी-तत्त्वबोधिनीसहिता, चौखम्बा विद्याभवन, वाराणसी, २००६ ।
३). अष्टाध्यायी-सहजबोध:, पुष्पा दीक्षित, पाणिनीयशोधसंस्थान, छत्तीसगढ, २००४ ।
४). वैयाकरणसिद्धान्तकौमुदी, (सं) म.म.श्रीगिरिधरशर्मा, मोतीलाल बनारसीदास, देहली, १९९७ ।
५). नन्दिकेश्वर-काशिका, नन्दिकेश्वर:, चौखम्बा, १९६६।
६). व्याकरणमहाभाष्यम्-(प्र.भाग:) चौखम्बा संस्कृतप्रतिष्ठानम्, दिल्ली-२०११
७). व्याकरणमहाभाष्यम्-(द्वि.भाग:) (ष.भाग:)चौखम्बा संस्कृतप्रतिष्ठानम्, दिल्ली।
८). परिभाषेन्दुशेखर:,डा.गिरिजेशकुमारदीक्षित:, सम्पूर्णानन्दसंस्कृतविश्वविद्यालय:, वाराणसी,१९□
९). वैयाकरणभूषणसार:, महामहोपाध्याय श्रीकौण्डभट्टविरचित:, चौखम्बा संस्कृत सीरीज- वनारस, १९३९ ।□

—०—

*सहायकाचार्य:,व्याकरणविभाग:*
*कलियाचक-विक्रमकिशोर-आदर्शसंस्कृतमहाविद्यालय:*
*हेडिया,पूर्वमेदिनीपुरम् (प.व.)*

# आख्यातपदार्थनिरूपणम्

डा.उमेशचन्द्रमिश्र:

जगति सत्स्वनेकेषु भूखण्डेषु भारतभूखण्ड: विश्वे धर्मसंस्कृतिपरम्परादर्शनक्षेत्रेषु विशिष्टं वैशिष्ट्यमावहति। अन्ये भूखण्डा: केवलं देशपदवाच्या: भारतदेशस्तु विश्वगुरुरिति प्रसिद्ध:। उक्तञ्च मनुस्मृतौ- एतद्देशप्रसूतस्य सकाशादग्रजन्मन:।
स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवा:।।१

भारतस्य विश्वगुरुरूपेण महत्वपूर्णयोगदाने दर्शनशास्त्राणां भूमिका सर्वातिशायिनी। तानि दर्शनशास्त्राणि षट् आस्तिकदर्शनानि षट् नास्तिकदर्शनानि इति भेदेन विभक्तानि। यद्यपि सम्प्रति तेषामेव भेदोपभेदकारणेनानेकानि दर्शनानि लभ्यन्ते तथापि तेषामन्तर्भाव: द्वादशदर्शनेषु एव। अचार्य: भतृहरि: व्याकरणशास्त्रस्य दार्शनिकस्वरूपविकासाय महत्वपूर्णप्रयासं कृतवान्। भतृहरिप्रणिते वाक्यपदीयग्रन्थे बहुत्र सृष्टि-आत्मा-परमात्मा-मोक्षादिविषयिणी चर्चा वर्तते इति एतस्य शास्त्रस्य परमतत्वसाधकता सिद्ध्यति। निरवयव: नित्य: कुटस्थ: स्फोट: शब्दब्रह्म इति अत्र शास्त्रे उदघोष्यते। जगत: कारणं स्फोट: तस्य विवर्तस्वरूपमिदमिति प्रतिपादयन्नाह वाक्यपदीये-

अनादिनिधनं ब्रह्म शब्दतत्वं यदक्षरम्।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यत:।।२

तदेव स्फोटतत्वं परमात्मस्वरूपम्। आचार्यशंकरस्य ब्रह्माद्वैतवत् वैयाकरणानां शब्दाद्वैतम्। अद्वैतं सत्यं ब्रह्मतत्वमेव शब्दानामर्था:। अत एवोक्तं हरिणा वाक्यपदीये -

तस्माच्छक्तिविभागेन सत्य: सर्व: सदात्मक:।
एकोऽर्थ: शब्दवाच्यत्वे बहुरूप: प्रकाशते।।३

वाक्यपदीये सत्यस्वरूपं यथा- यत्र द्रष्टा च दृश्यश्च दर्शनं चाविकल्पितम्।
तस्यैवार्थस्य सत्यत्वमाहुस्त्रय्यन्तवेदिन:।।४
विकारापगमे सत्यं सुवर्णकुण्डले यथा।
विकारापगमो यत्र तामाहु: प्रकृतिं पराम्।।५

तस्य स्फोटतत्वस्य सत्स्वप्यष्टभेदेषु वाक्यस्फोट उपेयत्वेन परिनिष्ठित:। एकतिङ् वाक्यम्, एकतिङ् विशेष्यकं वाक्यम्, अख्यातं सविशेषणं वाक्यमिति लक्षणलक्षितस्य वाक्यस्फोटस्य ज्ञानाय आख्यातस्वरूपं निरूपयाम:।

आख्यायन्ते स्वसत्तां प्राप्यन्ते प्रातिपदिकरूपेण शब्दा: येन इति व्युत्पत्या आख्यातशब्द: निष्पद्यते। अत्र समग्रार्थे वा परित इत्याद्यर्थे आ इति उपसर्गपूर्वक: ख्याप्रकथने इत्यस्माद् धातो: क्तप्रत्यये आख्यातमिति शब्दस्य निष्पत्ति:। प्रकथनमिति प्रकृष्टकथने वर्तते। आख्यातशब्दस्य व्युत्पत्ति: शास्त्रेषु बहुधा दृश्यते। स्वसत्तां प्राप्यन्ते प्रातिपदिकशब्दा: येन, तत् आख्यातम्। यस्यार्थ: धातु: भवति। आख्यातशब्दे कर्त्तर्थे क्तप्रत्ययोऽस्ति चेत्, आख्यातशब्दस्य व्युत्पत्ति: -प्रातिपदिकानि वक्ति योऽसौ धातु:, यै: धातुभि: आसमन्तात् ख्यायन्ते, स्वसिद्धिं प्राप्यन्ते यत: शब्दा: तत् आख्यातम्। अनया व्युत्पत्या अख्यातशब्द: धातूनां वाचक इति निश्चितं भवति। यतोहि धातुं विना कस्यापि प्रातिपदिकस्य निष्पत्ति: असम्भव:। तेनोक्तम्-**आख्यायते अनन्तरूपता धार्यते प्रकृतिरूपेण येन तत् आख्यातम्।**

तथैव वाक्यघटकीभूतं विशेष्यर्थमाख्याति वक्ति बोधयति इति तदाख्यातम् इति व्युत्पत्या अख्यातशब्द: तिङन्तस्य वाचक:। अत्रापि कर्त्तर्थे क्तप्रत्ययोऽस्ति। यदा तु आख्यातशब्दे भावे क्तप्रत्यय: स्वीक्रियते तदा अख्यायते इत्याख्यातम् इति भावव्युत्पत्या आख्यातशब्द: भावस्य वा क्रियाया: वाचक:। यदा तु अख्यायन्ते उपस्थाप्यन्ते स्वसत्तां धात्वादिभि: तत् आख्यातम् इति आख्यातशब्दस्य व्युत्पादनं तदा आख्यातशब्द: तिङ्मात्रस्य बोधक:। एवमाख्यातशब्दस्य अनेका: व्युत्पत्तय: भवितुमर्हन्ति। पूर्वोक्तव्युत्पत्तीनामाधारेण आख्यातशब्दस्य त्रयोऽर्था: सम्भवन्ति। **तिङ्प्रत्ययार्थ:, धातुमात्रार्थ:, धातुतिङ्प्रत्ययो: संयोगेन निष्पन्नस्य तिङन्तस्यार्थ:।** एषु तिङ्प्रत्ययार्थे आख्यातशब्दस्य प्रयोग: सर्वप्राचीन:। यतोहि विश्वस्य सर्वप्राचीनवैदिकसाहित्ये आख्यातशब्दोऽयं तिङ्प्रत्ययमात्रार्थे प्रयुक्त: दृश्यते।

परवर्त्तिसमये वैयाकरणै: अयमाख्यातशब्द: धातुमात्रार्थे प्रयुक्त:। एतेषां मते सर्वाणि प्रातिपदिकानि आख्यातजानि भवन्ति। अस्मिन् प्रसङ्गे आख्यातशब्देन न तु तिङन्तस्य न वा तिङ्प्रत्ययमात्रस्य ग्रहणं सम्भवति। तिङन्तपदात् वा तिङ्प्रत्ययमात्रात् पाणिनिना प्रातिपदिकनिर्माणाय न कोऽपि प्रत्ययो विहित:। अनेन आख्यातपदेन धातुमात्रस्यैव ग्रहणं भवतीति निश्चितं भवति। केवलं धातो: एव कृत्प्रत्ययस्य विधानेन प्रातिपदिकं भवतीति आख्यातशब्दोऽत्र धातो: वाचक:।

आख्यातशब्दोऽयं ऋक्प्रातिशाख्ये तथा तस्य भाष्ये शुकलयजुर्वेदप्रातिशाख्ये चतिङन्तार्थे प्रयुज्यते। एवमाख्याशब्द: तिङन्तस्य वाचक इति निरुक्तकारयास्क: तथा वैयाकरणपाणिनिरपि व्यवहरति। परन्तु वार्तिककारेण कात्यायनेन भाष्यकारेण भगवता पतञ्जलिनाऽयमाख्यातशब्द: तिङन्तार्थे तथा तिङ्प्रत्ययमात्रार्थे च प्रयुक्त:। नैयायिका: अपि तिङन्तार्थे आख्यातशब्दस्य प्रयोगं कुर्वन्ति। अनेन निश्चितं भवति पूर्वोक्तेषु त्रिष्वर्थेषु आख्यातशब्दस्य प्रयोग:। एषु धातुमात्रार्थे तथा च तिङन्तपदस्यार्थे आख्याशब्दस्य प्रयोग: लाक्षणिक:। तिङ्प्रत्यय एव आख्याशब्दस्य वाच्यार्थ: भवितुमर्हति।

**आख्यातपदवाच्यतिङ्प्रत्ययानां भेदा:-**

सूत्रकारपाणिने: मतेन आख्यातपदवाच्या: मूलत: अष्टादशप्रत्यया:। अत्र वार्तिककारस्य भाष्यकारस्य च ऐकमत्यं लभ्यते। ते यथा- तिप्, तस्, झि सिप्, थस्, थ, मिप्,वस्,मस्,त,आताम्, झ,थास्,आथाम् ,ध्वम्, इड्, वहिङ्, महिङ्। एतेषां प्रत्ययानामेवादेशा: लकारस्य स्थाने भवन्ति। अन्येऽपि दार्शनिका: नैयायिका:, मीमांसकादय: एतान् तिङ्प्रत्ययान् अष्टादशसंखकाख्यातान् सहर्षं स्वीकुर्वन्ति। लकारशब्देन काल: उच्यते। तेषां संख्या दश भवति। ते यथा - लट्, लिट्, लुट्,लृट्, लोट्, लङ्,विधिलिङ्, आशीलिङ्, लुङ्, लृङ् इति। एतदतिरिक्त: एक: लेट् लकारोऽस्ति यस्य प्रयोग: केवलं वेदे प्राप्यते। लौकिकभाषायामस्य लकारस्य प्रयोगो न लभ्यते। प्रक्रियां लडादिशब्दघटकाकारटकारादीनामनुबन्धरूपेण लोप:। तत्र स्थानित्वेन लकार एव अवशिष्यते। तेषामेव स्थाने तिबादयोऽऽदेशा: तिप्तस्झिसिप्थस्थमिप्वस्मस्ता-ताम्झथासाथाम्ध्वमिड्वहिङमहिङ्६ सूत्रेण। अत्र टकारानुबन्धयुक्ता: लकारा: पञ्च एवं ङकारानुबन्धप्रयुक्तलकारा: पञ्च। एवं लकाराणां परिगणनं नैयायिकानां मीमांसकानां चापि। नैयायिकानां मते तु लेट् लकार: इति कोऽपि लकार: नास्ति। ते केवलान् लौकिकशब्दान् विचारयन्ति। वैयाकरणैस्तु लौकिकशब्देन सह वैदिकशब्दा: अपि विचार्यन्ते। अतो

वैयाकरणानां नये लेट् लकारस्य परिगणना नितरामावश्यकी। प्रत्येकलकारेषु त्रीणि वचनानि त्रय: पुरुषा: च भवन्ति। अत्मनेपदस्य कृते नव तिङ्प्रत्यया: परस्मैपदस्य च कृते नव तिङ्प्रत्यया: एवमाहत्याष्टादशतिङ्प्रत्यया:। वस्तुत: एतेषाम् अष्टादशतिङ्प्रत्ययानाम् आत्मनेपदपरस्मैपदभेदा:, लकारभेदा: विकरणभेदात् भवन्ति। एवं प्रत्येकधातूनां साधारणतया प्रक्रियाभेदेनाशीत्यधिकैकशतं १८० भेदा: जायन्ते। लेट् लकारस्य नव ९ भेदान् संगृह्य सर्वसंयोगेन तिङ्प्रत्यायानां संख्या अष्टनवत्यधिकैकशतम्१८९। तङ् प्रत्याहारपदेनात्मनेपदाख्यातानां व्यवहार:। तिङ् प्रत्याहारपदेन परस्मैपदस्य आख्यातानां प्रयोग:। वाक्येषु अनेकानि सुबन्तपदानि आख्यातमेकमेव। अख्यातपदानामनेकत्वे वाक्यभेदोपजायते।

**आत्मनेपदपरस्मैपदव्यवहारस्य कारणम् -**

क्रियाया: फलं तस्य कर्त्ता च एकत्र भवत: यस्य भेद: न सम्भवति तदात्मनेपदम्। अनेन निश्चितंभवति यदि कश्चन स्वस्य फलप्राप्त्यर्थं यतते तदा आत्मनेपदम्। अत्र पाणिने: सूत्रम् स्वरितञित: कर्त्रभिप्राये क्रियाफले ७ । तेन देवपूजादौ संकल्पकाले यदि स्वस्याभीष्टसिद्ध्यर्थं वाक्यं तदा अहं कुर्वे इति आत्मनेपदस्य प्रयोग:। यदा तु अन्यस्य वा यजमानस्य कार्यसिद्ध्यर्थं संकल्पवाक्यं तदा अहं करोमीति परस्मैपदस्योपयोग:। एतदेव वार्तिककारस्य, ८, भाष्यकारस्य९,कैयटस्य१०,नागेशस्य११ च मतम्। आचार्य: अपिशलिरपि फलव्यापारयो: एकनिष्ठत्वे अत्मनेपदमिति५ समर्थयति। फलस्य स्वनिष्ठत्वं परनिष्ठत्वं वा कर्तु: विवक्षाधीनम्। यदा फलस्य कर्तृनिष्ठत्वस्य विवक्षा तदा क्रियाया: आत्मनेपदि प्रयोग:। यदा परनिष्ठत्वस्य विवक्षा तदा परस्मैपदम्।

अनेन निश्चितं यहभाष्यवृत्तिकारयो: मते तिङ्प्रत्ययार्थे अख्यातशब्दस्य वार्तिककारस्य मते तिङन्तार्थे अख्यातशब्दस्य प्रयोग: भवति। अत: क्रियाया: कालेन सह पूर्वापरीभावबोधकमाख्यातम्। कालवाचकता अख्यातस्यैव। भुक्त्वा भोक्तुमित्यादौ कालस्य पूर्वापरीभाव: प्रतीयते। परन्तु सिद्धक्रियास्तीति क्रियाया: प्रधानता नास्ति। अत: आख्यातपदेन साध्यक्रिया उच्यते। यथा पचति खादतीत्यादय:। अनेन ज्ञायते शास्त्रे प्रमुखतया आख्यातपदस्य व्यवहार: तिङन्तार्थे वर्तते।

---

**सन्दर्भाः सहायकग्रन्थाश्च** –

१.मनुस्मृतिः-२.१२० २. वाक्यपदीयम्-१.१ ३. तदेव - ३.३.८७
४.तदेव -३.३.७२ ५. तदेव - ३.२.१५
६.अष्टाध्यायी - ३.४.७८ ७. अष्टाध्यायी -१/३/७२
८.अष्टाध्यायी १.३.७२ सूत्रवार्तिकम् ९ अष्टाध्यायी १.३.७२भाष्यम्
१०. अष्टाध्यायी १.३.७२भाष्यटीका - प्रदीप
११. अष्टाध्यायी १.३.७२भाष्यटीका-उद्योत

—०—

**सहायकाचार्य:, नव्यव्याकरणविभाग:**
**केन्द्रीयसंस्कृतविश्वविद्यालय:, श्रीसदाशिवपरिसर:, पुरी, ओडिशा ।**

# जीवसृष्टितत्त्वम्

सत्येन्द्रनाथ आदकः

संस्कृतस्य महनीयता अनादिकालादेव प्रसिद्धा। न केवलं प्राचीन दृष्ट्या अपि तु अखिलसृष्टितत्त्वस्य संस्कृतं निदर्शनं बोधकं च एतत्। साधारणमनुष्याणां प्राथमिकीयं जिज्ञासा यत् दृश्यमानमिदं जगत् परमेश्वरेण कथं सृष्टम्? सृष्टेः प्राक् जगदिदं कीदृशं वा आसीत् ? कल्पादौ च जीवाः कथं जाताः? एवम् समृज्यमानेषु प्रश्नेषु उच्यते तावत् संस्कृतसाहित्ये सजीवाः, निर्जीवाः, जीवनस्य स्तराः विषयाः सन्ति। न केवलमेव उल्लिखिताः अपि तु तेषां विश्लेषणमपि अस्ति। जीवस्वरूपं वेदेषु बहुधा निर्दिष्टं यथा-

"द्रप्सश्चस्कन्द प्रथमामनु द्यूनिमं च योनिमनु यश्च पूर्वः।
समानं योनिमनु संञ्चरन्तं द्रप्सं जुहोम्यनु सप्त होत्राः।।"[१]

अपि च- "अजो ह्येको जुषमाणोऽनुशेते[२]।"

**जीवशब्दस्योत्पत्तिः**-जीवविषयकं विज्ञानं जीवविज्ञानमित्युच्यते। जीवः नाम कः, विज्ञानं च किमित्यस्मिन् विषये स्वाभाविकः प्रश्नः आयाति। तदिदानीं जीवो नाम कः इत्युच्यते। जीवति इति जीवः। काश्चन व्युत्पत्तयः यथा-

"जीर्यति क्विन्नी भवत्यनेनेति"[३] व्युत्पत्त्या "जृधातोः जृशृस्तृजागृभ्यः क्विन्"[४] इति सूत्रेण क्विन्प्रत्ययेन जीव इति शब्दः निष्पद्यते। तस्यार्थः जीवनमिति। जीवृ इत्यस्मात् हलश्च घञ्प्रत्ययेन जीवशब्दः निष्पद्यते। तस्यार्थः प्राणधारणम्। अमरकोषे एवमुक्तमस्ति- "जीवोऽसुधारणमिति"[५]। तेन प्राणधारणमित्येव अर्थः आयाति। "जीवो विनयिता साक्षी मुकुन्दोऽमितविक्रमः"इति विष्णुसहस्रनामस्तोत्रे अस्ति। यस्य जीवनम् अस्ति सः जीवः। वैदिकवाङ्मये जीवनं प्राणशब्दस्यार्थः आयुः भवति उक्तञ्च- "आयुर्न प्राणः"[६]। प्राणवायुः जीवनस्याधारः। सायणाचार्येण उक्तम्- "आयुर्मुखे संचरन् प्राणः प्रशसन् वायुरिव प्रियतमः। यद्वा यथा प्राणवायुः आयुः जीवनमवस्थापयति[७]"। अपि च कौषीतकिब्राह्मणोपानिषदि- "यावद्ध्यस्मिन् शरीरे प्राणो वसति तावदायुः[८]"। वेदे प्राणवाचकशब्दः "असुः" इति शब्देन अभिहितम्। प्राणदायिनी शक्तिः एव असुनीतिः। अनया पञ्चेन्द्रियाणि शक्तियुक्तानि यथा- "असुनीते मनो अस्मासु धारय जीवातवे सु प्रतिरा न आयुः।
रारन्धि नः सूर्यस्य संदृशि धृतेन त्वं तन्वं वर्धयस्व।।
असुनीते पुनरस्मासु चक्षुः पुनः प्रणमिह नो धेहि भोगम्।
ज्योक् पश्येम सूर्यमुच्चरंन्तमनुमते मृळयाः नः स्वस्ति[९]।।"

**वेदानुसारं जीवोत्पत्तिः** - ऋग्वेदे सृष्टेर्मूलकारणम् आपः वा सलिलमुक्तमस्ति।[१०] सृष्ट्यारम्भे सलिलावस्थायां यद्विकृतिरभूत्, सैव समुद्रार्णवस्य रुपमधारयत्, तत इयं स्वावस्थां परिवर्त्य आप इत्युत्पादयामास। ऋग्वेगे आपः तत्त्वस्यार्थः प्रकृतेः वा पञ्चभूतानामवस्था अस्ति, यस्मिन् तत् साम्यावस्थायां निवर्तमानत्वमवधारयति। ततोऽग्निः

तज्जले प्रविष्टोऽभवत् तथा चैतत् परिमाणस्वरुप: एक: स्वर्णिमाण्ड: प्रादुर्भूत:। हिरण्याण्डात् प्रजापतेरुत्पन्नत्वादयं हिरण्यगर्भोऽप्युच्यते। प्रजापति: ब्रह्माण्डस्वरुपे हिरण्यगर्भेऽवस्थित आसीत्।[११] ऋग्वेदसंहितानुसारेण सृष्टिविधाने साहाय्यमाचरत: तस्य पुरुषस्याङ्गप्रत्यङ्गेभ्योऽपि अनेका: सृष्टय: अनुभूवन्।[१२] हिरण्ममयेन जलेषु पुरुष: उत्पन्न:। स आत्मानं द्विधापातयत्। तत: तौ पत्नी पतिश्च सृष्टौ। तस्मात् पुरुषमिथुनात् सृष्टि: जाता । प्रजापतिसंकल्पदावैते वायव्या आरण्या ग्राम्याश्च पशवो जाता- "पशूस्ताँ चक्रे वायव्यानारण्या ग्राम्याश्च ये"[१३]। अपि च मैत्रायणीसंहितायां श्रूयते - "औषधीरनु पशव, पशूननुमनुष्या:"[१४]।

**उपनिषदनुसारेण जीवोत्पत्ति:-** अत्र सृष्टिप्रक्रिया तु एवमस्ति- "तदैक्षत बहु स्यां प्रजायेय"[१५] इति परमेश्वरस्य ईक्षणेन तस्यैव अंशभूताया प्रकृते: विभागद्वयं सम्भवति। तमोरज:सत्त्वगुणानां साम्यावस्था भवति प्रकृति:। तत: सत्त्वशुद्धिविशुद्धिभ्यां माया अविद्या इति प्रकारद्वयं सम्भवति। मायाविम्बं वशीकृत्य तिष्ठति स ईश्वर इत्युच्यते। अविद्यां वशीकृत्य यस्तिष्ठति स प्राज्ञ: इत्युच्यते। तस्याम् अवस्थायां यत् शरीरं तिष्ठति तत् कारणशरीरमित्युच्यते। इदं शरीरं सुषुप्त्यवस्थायां प्राज्ञेन अनुभूयते। शब्दादिविषयाणां भोगाय स्थूलविषया: अपेक्षन्ते। अत: पुन: एतेषां विषयाणाम् इन्द्रियादीनां स्थूलत्वसम्पादनाय पञ्चीकरणं जातम्। प्रत्येकं भूतस्य आदौ द्विधा विभाग: क्रियते। तदनन्तरं विभक्तस्य एकस्य चतुर्धा पुनर्विभाग: क्रियते। तद्यथा[१६] - "द्विधा विधाय चैकैकं चतुर्धा प्रथमं पुन:।
स्वस्वेतरद्वितीयांशैर्योजनात् पञ्च पञ्च ते।।" इति ।

पञ्चीकरणात् परं स्थूलं शरीरमुत्पद्यते। तच्च भोगयोग्यम्। अस्मिन् स्थूलशरीरे तैजस: विश्वम् इति नाम्ना भोगं करोति। अत्र स्थूलशरीरे चतुर्विधभूतग्रामा: उत्पद्यन्ते। चतुर्विधभूतग्रामा हि जरायुजा: अण्डजा: स्वेदजा: उद्भिज्जा: चेति।

**मनुसंहितानुसारेण जीवोत्पत्ति:-** सृष्ट्यारम्भे समग्रपृथिवी जलेन परिपूर्णा आसीद्। परमात्मा नानाविधजीवसृष्टये आदौ जलं सृष्टवान्। जलेषु बीजं शक्तिरुपं स आरोपितवान्। मनुना उक्तं-"सोऽभिध्याय शरीरात् स्वात् सिसृक्षुर्विविधा: प्रजा:।
अप एव ससर्जादौ तासु बीजमवासृजत्।।"[१७]

अत: सृष्टे: मूलकारणम् आप: सलिलं वेत्युक्तमस्ति। अहंकारस्य तन्मात्राणाञ्च ये सूक्ष्मा अवयवास्तान् आत्ममत्रासु षण्णां स्वविकारेषु योजयित्वा मनुष्य-तिर्यक्-स्थावरादीनि परमात्मा निर्मितवान्। तदुच्यते- "सन्निवेश्यात्ममात्रासु स सर्वभूतानि निर्ममे"[१८] तद्विषये परमालोच्यते। इदानीं कस्मिन् शास्त्रे जीवविषये किमुच्यते इति अवलोकयाम:।

**शास्त्रान्तरेषु जीव:** - संस्कृतशास्त्रेषु बहुत्र जीवशब्द: आगत:। प्राय: प्रत्येकस्मिन् दर्शने जीवशब्द: आगत:। तत्र तत्र कस्मिन्नर्थे जीवशब्द: प्रयुक्त: इति पश्याम:। जीव: ईश्वर: इति सामान्यतया सर्वत्र भेद: क्रियते।

**सांख्यदर्शने जीव:** - सांख्यदर्शने पञ्चविंशतितत्त्वानि सन्ति। पुरुष: प्रकृति: महत् अहङ्कार: पञ्चतन्मात्राणि मन: पञ्चज्ञानेन्द्रियाणि पञ्चकर्मेन्द्रियाणि पञ्चमहाभूतानि। अत्र पुरुष इति यत् तत्त्वमुच्यते तदेव जीव:। तथैव प्रारव्धकर्मवशात् जीवन्मुक्त: शरीरं तत्कर्मफलं भुङ्क्ते, परन्तु यदा तस्य कर्मण: समाप्तिर्जायते तदा विदेहमुक्ति: प्राप्यते।

**योगदर्शने जीवः -** योगदर्शनं सांख्यदर्शनस्य समतामेव भजते। अत्र केवलम् ईश्वर इत्येकं तत्त्वं स्वीक्रियते। अत एते सेश्वरसांख्या इति प्रसिद्धिः। ईश्वरस्य विषये एवं योगसूत्राणि सन्ति, “क्लेशकर्मविपाकाशयैः अपरामृष्टः पुरुषविशेष ईश्वरः, तत्र निरतिशयं सर्वज्ञवीज”मिति।

**न्यायदर्शने जीवः -**न्यायमतेऽपि कश्चन ईश्वरः अस्ति।तस्येच्छया सृष्टिर्भवति। पदार्थतत्त्वज्ञानेन तत्र मुक्तिः सम्भवति जीवात्मनाम्। परमात्मा तु एक एव। जीवात्मा प्रतिशरीरं भिन्नः। परमात्मा भवति नित्यज्ञानाधिकरणः अतः सर्वज्ञः। जीवात्मा तु अल्पज्ञः। तस्य ज्ञानं प्रत्यक्षादिप्रमाणैः जायते।

**अद्वैतवेदान्ते जीवः -** अद्वैते तु ब्रह्मणः जीवो न भिन्नः। ब्रह्मैव मायासंसर्गात् उपाधिपरिच्छिन्नं सत् जीव इत्युच्यते। अत एव अत्र बहुजीववादः न सम्भवति। जीवः विभुपरिमाणः इत्युच्यते।

**अचिन्त्यभेदाभेदे जीवः -** जीवः ब्रह्मणः एव एकदेशः परन्तु ततः भिन्नः अणुपरिमाणः भवति। अयं ज्ञाता सत्त्वादिगुणत्रययुक्तः परमात्माधीनः श्रीहरेः नित्यदासस्वरूपः। परमात्मनः अंशिनः अंशः किञ्च तस्यैव चैतन्यरूप इति कृत्वा अभिन्नः, अणुपरिमाणः ईश्वरनियम्य इत्यतः भिन्नोऽपि भवति जीवः।

**शुद्धाद्वैते जीवः-**भगवान् एव रमणेच्छया आत्मनः आनन्दांशातिरोधाय केवलं सद्रुपेणचिदंशेन च आत्मानं बहुधा प्रकटीकरोति। तदैक्षत बहुस्यां प्रजायेय[११] इति श्रुतिवाक्यमेव एतादृशमतस्य पोषकम्। ईश्वरस्य एव इदं नूतनं रूपं जीव इत्युच्यते।

**वैज्ञानिकयुगे जीवस्योत्पत्तिः -**आधुनिकविज्ञानादिशास्त्रेषु द्विप्रकारकः जीवः भवति। एकः प्राणी, अपरः उद्भिद् इत्युच्यते। जीवविज्ञानस्य पाश्चात्यः शब्दः Biology भवति इति। स च शब्दः द्वाभ्यां ग्रीकशब्दाभ्यामागतम्। एकं bios, तस्यार्थः जीवनम्, अपरं च logia तस्यार्थः ज्ञानमिति। आदौ अशीतिशतम् ईशवीयाब्दे अयं शब्दः जार्मानीमध्ये व्यवहृतः। ततश्च फ्रान्सदेशीयः निसर्गवेत्ता जँ-वातिस्त-दि-लामार्का-महोदयः जीवितवस्तुविषयकाणामनेकेषां शास्त्राणां धारकत्वेन अस्य प्रचलनं कृतवान्। अनन्तरं व्रिटिश्-प्राणिविज्ञानी टमास् हेनरी हाक्सली जीवविज्ञानम् एकत्रीकृतं शास्त्रमिति प्रतिष्ठापितवान्। स उक्तवान् उद्भिदां प्राणिनां च विभाजनम् अर्थहीनम् अतः जीवितवस्तूनां चर्चा एकत्रैव कर्तव्या।

**वायोपोयेसिस् (Biopoiesis) -**स च शब्दः द्वाभ्यां ग्रीकशब्दाभ्यामागतम्। एकं bios तस्यार्थः जीवनम् अपरञ्च poiesis तस्यार्थः सृष्टिरिति। एतेन जीवनस्य उत्पत्तिनिर्णयः अनुमीयते। पृथिव्यां ४०००-४३०० मिलियान् वर्षेभ्यः प्राक् आधुनिक जीवाश्मविद्यायाः जीवस्योत्पत्तिः ज्ञायते स्म। रसायनविदमतानुसारं $O_2$ $Co_2$ $H_2$ $N_2$ इत्यादयः संमिल्य जीवदेहे मौलिकपदार्थाः भवन्ति। DNA, Protein च योजयित्वा कोषस्य सृष्टिः जायते। कोषः जीवानां मूलम् एककम्। एवं Gene इति वंशगतस्य एककं भवति। विवर्तनप्रक्रियामाध्यमेन नवप्रजतिजीवाः जायन्ते। वस्तुत इह जगति सर्वे जीवाः प्रकृतितः जायन्ते। छान्दोग्योपनिषदि त्रिविध जीवाः स्वीकृताः सन्ति। यथा- “तेषां खल्वेषां भूतानां

त्रीण्येव बीजानि भवन्ति अण्डजं जीवजमुद्भिज्जमिति"[२०]। परवर्त्तिकाले उत्पत्त्यानुसारं जीव: चतुर्विध: प्रोक्त:, यथा-जरायुज:, अण्डज:, स्वेदज:, उद्भिज्जश्चेति। अपि च वेदान्तसारग्रन्थे उल्लिखितानि यथा-"चतुर्विधस्थूलशरीराणि तु जरायुज-अण्डज-स्वेदज-उद्भिज्जाख्यानि"[२१]। जीवानां शास्त्रीय: विभाग: एवम्। आधुनिकविज्ञानदृशापि ये विभागा: सन्ति तेऽपि अत्र अन्तर्भवन्ति। इदानीम् एतेषां विषये विस्तारेण आलोच्यते-

**जरायुज: -** जरायु +जन् + ड= जरायुज:। जरायुर्नाम कुक्षि:। गर्भं परिवृत्य या चर्मवरणा, सा गर्भशय्या। मातृगर्भाशय: यत्र शिशु: जन्मन: प्राक् तिष्ठति। जरायुभ्य: जायन्ते इति कारणात् जरायुजा: इति कथ्यन्ते। जरायु इति शब्दपूर्वकात् जनेर्ड इति सूत्रेण जनिधातो: डप्रत्यये सति जरायुज इति शब्द: निष्पद्यते। अत्र उदाहरणानि भवन्ति मनुष्या: पशव: वानरा: इत्येवम्। जरायुभ्य: मनुष्यादय: प्रादुर्भवन्ति, पश्चान्मुक्तो जायन्ते। मनुना उक्तम्-

"पशवश्च मृगाश्चैव व्यालाश्चोभयतोदत:।
रक्षांसि च पिशाचाश्च मनुष्याश्च जरायुजा:।।"[२२]

स्तन्यपायिन: प्रायश: जरायुजा: भवन्ति जतुका: इति प्राणिनं विहाय। एतेषु केचित् मांसाहारिण: केचित् तु शाकाहारिण: भवन्ति। यथा गता: अश्वा: अजा: गाव: मृगा: तृणभोजिन: भवन्ति। तथा च व्याघ्रा: सिंहा: शृगाला: मांसाहारिण: भवन्ति।

**अण्डजा:-** अण्ड+जन्+ ड। अण्डात् जायते इति अण्डज:। अण्डं नाम डिम्बमिति। अण्डात् जायते इति व्युत्पत्या अण्ड इति शब्दपूर्वकात् जनि धातो: डप्रत्यये अण्डज इति रुपं निष्पद्यते। येषां जन्म साक्षात् गर्भात् न भवति अपि तु आदौ मातु: अण्डं निर्गच्छति तत: अण्डात् जन्म भवति ते अण्डजा उच्यन्ते। सृष्टितत्त्वानुसारं अण्डज: द्विधा। यथा-स्थलजात: जलजातश्च। एतेषु अन्तर्भवन्ति पक्षिण: सर्पा: मकरा:।

**स्वेदजा:-** स्वेद+ जन्+ ड। स्वेदभ्य: जात: इति स्वेदज:। स्वेदेभ्य: जायन्ते इति स्वेदजा:। व्युत्पत्तिस्तु समाना स्वेदशब्दपूर्वकात् जनिधातो: चप्रत्यये निष्पन्नं रूपमेतत्। स्वेद: पार्थिवद्रव्याणां तापेन क्लेद:, ततो दंशमशकादय: जायन्ते। स्वेदेन जायमान: स्वेदज: भवति। मनुना उक्तम्-

"स्वेदजं दंशमशकं यूका-मक्षिकमत्कुणम्।
उष्मणश्चोपजायन्ते यच्चान्यत् किञ्चिदीदृशम्।।"[२३]

**उद्भिज्जा:-**उद्भेदनमुद्भिद भावे क्विप्, ततो जायन्ते ऊर्ध्वं बीजं भूमिञ्च भित्त्वेत्युद्भिज्जा वृक्षा: लतादय:। उद्भिज्जा: द्विधा, यथा बीजजाता:, काण्डजाता: च। आंगलभाषायां Flora तदेव उद्भिज्जम् । तत्र Botany इति विषय: भवति तदाधारीकृत्य पठितुम्। शुक्लयजुर्वेदे रुद्राध्याये आम्नातमस्ति- "नमो वृक्षेभ्यो हरिकेशेभ्य:।" "वनानां पतये नम:।" "नम ओषधीनां पतये"[२४] इति।

**उपसंहार: -** वैदिकसूक्तादिषु जीवस्वरूपाणि उपलभ्यन्ते। एभि: जीवसृष्टिरहस्यै: आधुनिका: वैज्ञानिका: समृद्धा: भवन्ति। एवम् च जीवविज्ञानस्य महती उन्नतिरपि भवति। अत्र मया वक्तुं शक्यते यत् इदानीं जीवसृष्टिस्वरूपम् अस्माकं पुरत: यथैव दृश्यते तस्य

मूलस्त्रोतोभूतानि प्राचीनशास्त्राणि इति। वैदिककालादारभ्य इदानीं यावत् यानि जीवसृष्टितत्त्वानि विहितानि सन्ति तेषु वैज्ञानिकतत्त्वप्राचीनतत्त्वानां सामञ्जस्यं परिलक्ष्यते।

**सन्दर्भाः –**


१. अथर्ववेदः- १८/४/३ ।
२. श्वेताश्वतरोपनिषद् - ४/५ ।
३. शब्दकल्पद्रुमः - पृ.-३८२ ।
४. सा एव - पृ-५३८ ।
५. अमरकोषः - २.८.११९.२.३ ।
६. ऋग्वेदः - १.६६.१ ।
७. वेदवज्ञिानचिन्तनम् - पृ.-२६।
८. तदेव - पृ.-२६ ।
९. ऋग्वेदः -१०/५९/५-६ ।
१०.तम आसीत्तमसा मूढमग्रे अप्रकेतं सलिलं सर्वथा इदम्। ऋग्वेदः-१०/१२९/३।
११.हिरण्ये ब्रह्माण्डरूपे गर्भरूपेणावस्थितः प्रजापतिः। तैत्तिरीयसंहिता -४/१/८/३।
१२.ऋग्वेदः१०/५/६,८,१०, १२।
१३.यजुर्वेदः-३१/६ ।
१४. वैदिकम्योगोविज्ञानम् - पृ.-५९।
१५. छान्दोग्योपनिषत् -६/२/३।
१६. वेदान्तसारः - ४८।
१७. मनुसंहिता - १/८।
१८. सा एव - १/१६
१९. छान्दोग्योपनिषत् -६/२/३।
२०. सा एव -६/३/१ ।
२१.वेदान्तसार - श्लो. ५४ ।
२२. मनुसंहिता -१/४६ ।
२३. सा एव -१/४५।
२४.यजुर्वेदः षोडशाध्यायः ।


**सहायकग्रन्थसूची-**


१. अमरकोषः, श्रीमद गुरुनाथ विद्यानिधि भट्टाचार्य, संस्कृत पुस्तक भाण्डार, कोलकाता-६।
२. उपनिषद, सेन, तत्त्वभुषण, घोष, हरफप्रकाशनी, कोलकाता-७।
३. पातञ्जलदर्शन, अशोक कुमार वन्द्योपाध्याय, श्री वलरामप्रकाशनी, कोलकाता-६।
४. वेद, श्री विजनबिहारि गोस्वामि, हरफप्रकाशनी, कोलकाता-७।
५. वेदविज्ञान-चिन्तनम्, प्रो.व्रजबिहारी चौबे, कात्यायन वैदिकसाहित्यप्रकाशन, होशियारपुर।
६. वैदिकम् योगविज्ञानम्,ड.धीरेन्द्र झा, कलाप्रकाशन, वाराणसी-५।
७. वेदान्तसार, विपदभञ्जन पाल, संस्कृत पुस्तकभाण्डार, कोलकाता-६।
८. भारतीयदर्शनपरिचय, अध्यापक यदुपति त्रिपाठी, वि,एन,पब्लिकेशन, कोलकाता-७३।
९. मनुसंहिता, मानवेन्दुवन्द्योपाध्याय, संस्कृतपुस्तकभाण्डार, कोलकाता-६।
१०. शब्दकल्पद्रुमः, राधाकान्तदेव,राष्ट्रियसंस्कृतसंस्थानम्, निउदिल्ली ।


—०—

*Ph.D. शोधच्छात्रः, संस्कृतविभागः,*
*राँचीविश्वविद्यालयः, राँची, झाडखण्ड ।*

# जीवनमूल्यसंरक्षणे संस्कृतस्य भूमिका (विशिष्टे वैदिकसन्दर्भे)

डॉ. उमा शर्मा

ब्रह्ममुखनिर्गतं धर्मज्ञापकं शास्त्रं 'वेद'शब्देन निगद्यते । ज्ञानार्थकाद् 'विद्'धातो: 'घञ्'प्रत्यये कृते सति 'वेद'शब्द: निष्पद्यते । वेद्यन्ते ज्ञायन्ते धर्मार्थकाममोक्षरूपा: पुरुषार्था: येन स: वेद: । वेदा: पुरुषसृष्टा: न सन्ति । यथा- 'अपौरुषेयं वाक्यं वेद:' इति अर्थसंग्रह:[१] । ऋषयस्तु मन्त्रद्रष्टार: सन्ति यथोक्तं यास्काचार्येण 'ऋषिदर्शनात्'[२] आचार्यशङ्करेण शारीरकभाष्ये 'अत एव च नित्यत्वम्' इत्यस्य वेदान्तसूत्रस्य व्याख्यायां श्लोकोऽयमुद्धृतोऽस्ति-

युगान्तेऽन्तर्हितान् वेदान् सेतिहासान् महर्षय: ।
लेभिरे तपसा पूर्वमनुज्ञाता: स्वयम्भुवा ।।

महाभारतेऽपि सत्यमिदमुद्घाटयता भगवता व्यासेन निगदितम्।

ऋषयस्तपसा वेदानध्यैषन्त दिवानिशम् ।
अनादिनिधना विद्या वागुत्स्रष्टा स्वयम्भुवा ।।[३]

महर्षिणा दयानन्देनापि ऋग्वेदादिभाष्यभूमिकायां वेदा: अपौरुषेया: इति सप्रमाणमुद्घोषितम् । -

तस्माद्यज्ञात्सर्वहुत: ऋच: सामानि यज्ञिरे ।
छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत: ।।[४]

एवं वेदो हि नाम अशेषज्ञानविज्ञानराशि: । सायणाचार्यमहोदयेन प्रतिपादितम्- ''इष्टप्राप्त्यनिष्टपरिहारयोरलौकिकमुपायं यो वेदयते स वेद:'' । अत: समग्रज्ञानविज्ञानस्वरूपं शाश्वतिकमपौरुषेयं वाक्यं वेद:। भागवते तु वेदा: ब्रह्मात्मविषया। कथिता:[५] सायणाचार्येण ऋग्भाष्यस्य मङ्गलाचरणे कथितम्– 'यस्य नि:श्वसितं वेदा:' । एतदपि सुनिश्चितमेव यत् सर्वा: उपनिषद: वेदानां साररूपेण वर्त्तन्ते। परञ्च वेदा: केवलमाध्यात्मिकं ज्ञानमेव न प्रकटयन्ति, अपितु सर्वे लौकिका: आचारा: वेदानामेव विषया: सन्ति । पुरुषार्थस्योर्थोऽस्ति- पुरुषै: अर्थ्यते (प्रार्थ्यते) इति पुरुषार्था: । अनया व्युत्पत्त्या प्रत्यक्षमेव सिद्ध्यते यत् समाजे सर्वे जना: प्राय: धर्मार्थकाममोक्षपरायणा: भवन्ति। व्यवस्थितं जीवनं धर्मस्य वास्तविकं स्वरूपमस्ति । यच्चोक्तं मीमांसाग्रन्थे- 'यागादिरेव धर्म:' अन्यच्च 'वेदप्रतिपाद्य: प्रयोजनवदर्थो धर्म:'[६] । सोऽर्थो अस्मादभिन्न एव । व्यवस्थितं जीवनस्य कृते मानवजीवनं चतुर्षु विभागेषु विभक्तं वर्तते । चत्वारो विभागा: चत्वारो आश्रमा: कथ्यन्ते- 'ब्रह्मचर्य-गृहस्थवानप्रस्थसन्न्यासलक्षणा:' ।

ऋग्वेदकालादेव वर्णधर्मोऽपि सम्यग्व्यवस्थित: प्रतीयते । पुरुषसूक्ते चतुर्वर्णानां वर्णनं क्रमेण विद्यते । यथा-

ब्राह्मणोऽस्य मुखमासीद् बाहू राजन्य: कृत: ।
ऊरु तदस्य यद्वैश्य: पद्भ्यां शूद्रोऽजायत ।।[७]

अत्र तेषामुत्पत्तिस्थाननिर्देशेन तेषां कार्यविभाजनमपि गम्यते । स्मृतिषु वेद एव धर्माश्रयत्वेन गृह्यते । यथोक्तं मनुस्मृतौ– वेदऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम् ।

आचारश्चैव साधूनामात्मनस्तुष्टिरेव च ।।[८]

मानवानां कृते यच्छोभनीया जीवनपद्धतिः वर्तते, समाजे लोके च तेषां यानि आचरणानि वाञ्छितानि भवन्ति यैः लोकाचरणैः समाजे मार्गदर्शनं भवति तानि सर्वाण्येव वेदेषु स्पष्टतया दृश्यन्ते । भारतवर्षं यैः आचरणैः सर्वेषां मानवानां कृते स्वाचरणबलेन गुरोः पदमध्यतिष्ठत्ते आचाराः वैदिकसंस्कृतौ स्मृतिषु च प्रशंसिताः सन्ति । वैदिकमादर्शमाश्रित्यैव कथितमस्ति मनुस्मृतौ–

एतद्देशप्रसूतस्य सकाशादग्रजन्मनः ।

स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः ।।[९]

प्रश्नस्तावदुपस्थितो भवति यत् के ते आचाराः सन्ति यानाश्रित्य भारतीयसंस्कृतिः श्रेष्ठा गण्यते । सर्वप्रथमं धर्माचरणमेव कथितमस्ति मीमांसाशास्त्रेषु- 'अथातो धर्मजिज्ञासा' अस्य सूत्रस्य अयमभिप्रायोऽस्ति यत् ब्रह्मचर्यावस्थायां वेदाध्ययनानन्तरम् अर्थकामेष्वसक्तानां धर्मविषयिणी जिज्ञासा भवति । धर्मं जिज्ञासमानां श्रुतिग्रन्थाः एव प्रमाणम्[१०] । धर्मः च केवलं भौतिकं यज्ञमेव नोपदिशति परञ्च मानवानां कृते सर्वे सद्व्यवहारा एव अपेक्ष्यन्ते । काले काले धर्मे धर्मस्वरूपे वा परिवर्तनं भवति । येन च मानवतायाः रक्षा भवति । वस्तुतः ते एवाचारा स्वीकार्याः सन्ति यैः सर्वजनहितानि सम्पद्यन्ते । वैदिकधर्मः त्याग-तपश्चर्या-परोपकार-दयादाक्षिण्यादिभिः गुणैः समन्वितोऽस्ति । यस्य गुणस्य यादृशे समये आवश्यकता वर्तते स एवानुसरणीयो भवति । मनुस्मृतौ-

धृतिक्षमादमोऽस्तेयं शौचमिन्द्रियनिग्रहः ।

धीर्विद्यासत्यमक्रोधो दशकं धर्मलक्षणम् ।।[११]

इति कथितम् । एतानि धर्मलक्षणानि वेदेषु बाहुल्येनोपदिष्टानि सन्ति । यथा पवित्रता न केवलं शारीरिकदृष्ट्या अपेक्ष्यते, अपितु वाङ्मनःक्रिया-स्वपि पवित्रत्वं परमापेक्षितं भवति। उदाहरणार्थं यजुर्वेदस्य एकस्मिन् मन्त्रे ऋषिः देवान् पवित्रत्वं याचते–

परन्तु मा देवजनाः पुनन्तु मनसा धियः ।

पुनन्तु विश्वा भूतानि जातवेदः पुनीहि मा ।।[१२]

वैदिकीसंस्कृतिः पर्याप्तरूपेण समुन्नता आसीत् । तथा च इयं समुन्नतिः एकपक्षीया नैवासीत् । यतः वैदिकवाङ्मये ऋषिभिर्यदि- ''वयं स्याम पतयो रयीणां' इत्यादिना मन्त्रेण धनं काम्यते तर्हि तेन ऋषिणा बुद्धिधनमपि मुख्यतममानवमूल्यत्वेन संस्थाप्यते तद्यथा– यां मेधां देवगणाः पितरश्चोपासते ।

तया मामद्य मेधयाऽग्ने मेधाविनं कुरु ।।[१३]

अस्मिन् मन्त्रे सुस्पष्टमेव यत् देवाः पितरश्च श्रेयस्करी पुद्धिहेतोः प्रार्थ्यन्ते । एतेनैव मेधारूपधनेन प्रभावितः महर्षिः यदा देवं सवितारं स्तोतुं विश्वविश्रुतां गायत्रीं (गायत्रीमन्त्रं) गायति तदा असौ धियामुदयमेव प्रार्थ्यते ।[१४]

अस्मिन्नेव क्रमे गुरुविषयिणी भक्तिरपि वैदिकवाङ्मये आदर्श-मानवमूल्यरूपेण उल्लिखिता अस्ति । यथोक्तम् अथर्ववेदे-

''अनुव्रत: पितु: पुत्रो माता भवतु सम्मना:''[१५]

अर्थात् पुत्र: तथैवाचरणं कुर्याद्यथा पिता इच्छति । न केवलं पितरमेवानु-कुर्यात् अपितु मात्रा सह अपि मातु: सदृशै: विचारै: समायुक्त: भवेत् । न केवलं संहितासु प्रत्युत् उपनिषत्स्वपि अस्य मूल्यस्येषणीयत्वमुपदिष्ट-मस्ति यन्मातरं देववत्पूजयेदन्येऽपि च गुरुव: देववत्पूजयितव्या: - 'मातृदेवो भव । पितृदेवो भव । आचार्यदेवो भव ।'[१६]

धर्मस्यात्मा तपोऽस्ति । तपसा विना धर्म: साधयितुं न शक्यते । तपोमहिमा वेदेषु सर्वत्र पदे पदे प्रशस्यते । ऋग्वेदे ऋतस्य च सत्यस्य च उत्पत्ति: तपस एव प्रोक्ता–

''ऋतं च सत्यं चाभीद्धात्तपसोऽध्यजायत ।''[१७]

ऋग्वेदस्य अन्यस्मिन् मन्त्रे कथितमस्ति- तदेकं ब्रह्म अपि न अन्यस्मात् कस्माच्चिज्जायते अपितु तपस एव- 'तपसस्तन्महि नाजायतैकम्'[१८]।

धर्माचरणस्योद्देश्यं पापनिवारणमस्ति । पापमेव लोकानां दु:खकारणम् । ऋग्वेदे पापनिवारणाय अष्टचत्मिके सम्पूर्णे सूक्ते अग्निदेव: प्रार्थित: ।[१९]

दानकर्मण: उपदेशोऽस्ति वेदेषु । अथर्ववेदस्य एकस्मिन्मन्त्रे उक्तं- भो: जना: शतं हस्तै: धनसंग्रहं कुर्वन्तु तथा च सहस्रं हस्तै: दानं कुर्वन्तु-

''शतहस्त: समाहर सहस्रहस्त: संकिर ।''[२०]

अस्मिन् जगति त्यागभावनापि श्रेयस्करी । भूमण्डले अन्नानि, फलानि, वस्त्राणि अन्यानि च सर्वाण्यपि भोग्यवस्तूनि ईशकृपया प्रकृतिप्रदत्तान्येव। तेषु नास्ति कस्याप्येकाधिकार:। अत: सर्वैरपि मानवै: सर्वाणि वस्तूनि त्यागभावनया समुचितवितरणेनैव भोक्तव्यानि । अमुमेव सिद्धान्तमाश्रित्य भोगमुपदिशति भगवती श्रुति:- ''तेन त्यक्तेन भुञ्जीथा मा गृध: कस्यस्विद्धनम्''[२१] ।

वेदेषु अतिथिभ्य: न समर्प्य केवलभोजी सोदरपूर्तिकर्त्ता जन: पापी कथ्यते- ''केवलाघो भवति केवलादी''[२२] ।

श्रीमद्भगवद्गीतानुसारमपि आत्महेतो: भोजनव्यवस्थायै: क्रियते ते वस्तुत: पापान्नस्योपभोगमेव कुर्वन्ति तथा च यो यज्ञं कृत्वा तच्छिष्टं भुनक्ति स: सर्वेभ्यो पापेभ्यो मुच्यते । उक्तञ्च गीतायाम्– यज्ञशिष्टाशिन: सर्वे मुच्यन्ते सर्वकिल्विषै: ।

भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात् ।।[२३]

धर्मशास्त्रेषु 'अस्तेयम्' धर्मलक्षणेषु परिगणितमस्ति वेदेषु 'स्तेय' कार्यस्य निन्दा पदे पदे क्रियते ।

यो नो रसं दिप्सति पीत्वो अग्ने यो अश्वानां यो गवां यस्तनूनाम् ।

रिपु: स्तेन: स्तेयकृद्दभ्रमेतु निष हीयतां तन्वा३ तना च ।।[२४]

वेदेषु अनृतव्यवहारस्यापि निन्दा क्रियते । बृहदारण्यके ईश्वरोऽपि सत्यस्वरूप: कथित: – 'सत्यं ब्रह्मेति', 'सत्यं ह्येव ब्रह्म' ।अन्यच्च- 'सत्यं ततान सूर्य:'[२५] , 'सत्येनोत्तंभिता

भूमि:'[२६] , 'सत्यमेव जयते नानृतम्'[२७] । आचारे स्खलने जाते वेदेषु प्रायश्चित्तविधानानि कृतानि ऋषिभि: - यत्किं चेदं वरुण: दैव्ये जनेऽभिद्रोहं मनुष्याश्चरामसि ।

अचित्ती यत्तव धर्मा पूयोपिम मा नस्तस्मादेनसो देव रीरिष: ।।[२८]

विश्वबन्धुत्वमपि शिक्षितं वेदेषु । यजुर्वेदे कथितमस्ति– 'मित्रस्याहं चक्षुषा सर्वाणि भूतानि समीक्षे मित्रस्य चक्षुषा समीक्षामहे ।'[२९] भारतीयसंस्कृति: सर्वेषां मङ्गलं कामयते ।

सर्वे भवन्तु सुखिन: सर्वे सन्तु निरामया: ।
सर्वे भद्राणि पश्यन्तु मा कश्चिद्दु:खभाग्भवेत् ।।

निष्कर्षत: सद्वृतं सन्नीतिं च जना: कदापि न त्यजेयु: । एतादृशी भावना वेदेषु सर्वत्र प्रसृता विद्यमाना । वैदिकीं संस्कृतिं लक्ष्यीकृत्य ऋषिरुद्घोषयति ''सा प्रथमा संस्कृतिर्विश्ववारा'' । उक्तं च मनुस्मृतौ- 'धर्मजिज्ञासमानानां प्रमाणं परमं श्रुति:'[३०] ।

---

**सन्दर्भा: सहायकग्रन्थाश्च –**


१. लौगाक्षिभास्करप्रणीत:, अर्थसंग्रह:- पृ. ३८ ।
२. आचार्ययास्क:, निरुक्तम्- २/११ ।
३. महाभारतम् शान्तपर्व – २३२/२४ ।
४. शुक्लयजुर्वेद: - ३१/७ ।
५. श्रीमद्भागवतम् – १/१६/४६ ।
६. अर्थसंग्रह: - पृ. १३ ।
७. ऋग्वेद: - १०/९०/१२ ।
८. मनुस्मृति: - २/६ ।
९. सा एव– २/२० ।
१०. य: कश्चित्कस्यचिद्धर्मो मनुना परिकीर्तित: ।
स सर्वोऽभिहितो वेदे सर्वज्ञानमयो हि स: ।। मनुस्मृति: - १/७ ।
११. सा एव - ६/९२।
१२. यजुर्वेद: - १९/३९ ।
१३. स एव - ३२/१४ ।
१४. स एव - ३६/३ ।
१५. अथर्ववेद: - ३/३०/२ ।
१६. तैत्तिरीयोपनिषद् - १/११/२ ।
१७. ऋग्वेद: - १०/१९०/१ ।
१८. स एव - १०/१२९/३ ।
१९. स एव - १/९७/१-८ ।
२०. अथर्ववेद: - ३/२४/५ ।
२१. यजुर्वेद: - ४०/१ ।
२२. ऋग्वेद: - १०/११७/६ ।
२३. श्रीमद्भगवद्गीता - ३/१३ ।
२४. ऋग्वेद: - ७/१०४/१० ।
२५. स एव - १/१०५/१२ ।
२६. स एव - १०/८५/१ ।
२७. मुण्डकोपनिषद्- ३/१५।
२८. ऋग्वेद: - ७/८९/५ ।
२९. यजुर्वेद: - ३६/१८ ।
३०. मनुस्मृति: - २/१३ ।


—०—

*एसोसिएट् प्रोफेसर एवम्*
*अध्यक्ष, संस्कृतविभाग:, एन.ए.एस.कॉलेज, मेरठ(यू.पी)*

# रासलीलाया: स्वरूपं - श्रीमद्भागवतपुराणसन्दर्भे

डॉ. संगीता अग्रवाल

श्रीमद्भागवतपुराणस्य दशमस्कन्धे रासलीलाया: विशदतात्त्विकविवेचनं प्राप्यते। स्वस्वमतेन विद्वांस: एतस्या: लीलाया: गौरवं साधयन्ति। अत्रैव नीरोधलीलायां सर्वेषां टीकाकाराणां मते रासपञ्चाध्याय्यामात्मतत्त्वं गौरवञ्च समानं दृश्यते। रासलीलाया: पञ्चाध्याया: पञ्चप्राणा: एव। पञ्चप्राणानां परब्रह्मणि रमणं सर्वदा इत्यत्र तात्पर्यं रासस्य मूलं रस:। ''रसो वै स:।'' एको रस: अनन्तरूपं भूत्वा सर्वत्रैव प्रवहति। रासलीलाया: प्रयोजनविषये महाराजा परीक्षितोऽपि पृच्छति -

''किमभिप्राय एतन्न: संशयं छिन्धि सुव्रत।''[१]

तदुत्तररूपेण यत् श्रीशुकेनोक्तं-तत्र भगवता परब्रह्मरूपत्वाद् धर्माधर्मादिगुणदोषजनकक्रियात: परतत्त्वं समाधानमेव युक्ति:।

भगवद्गीतायां -''न मे पार्थास्ति कर्त्तव्यं त्रिषु लोकेषु किञ्चन'' इति भगवता स्वयमेव निर्दिष्टम्। '' न मां कर्माणि लिम्पन्ति। न मे कर्मफले स्पृहा ।।'' इति

अनेनापि सिद्ध्यति यत् सर्वत्र व्यापकस्य तत्तद्वस्तुसंसर्गजन्यगुणदोषसंसर्गो न भवति। श्रीमद्भागवतपुराणेऽपि श्रीशुक: रुद्रवह्निदृष्टान्तेन राजानं परीक्षितं तथ्यमिदं सुष्ठुरूपेण कथयति।[२] एतदेव विग्रहवतो परब्रह्मण: श्रीकृष्णस्य क्रियावत्त्वेऽपि क्रियाफलसम्बन्धरहितत्वम् ।

श्रीमद्भागवते निरुपधिस्नेहरूपाहैतुक्या भक्त्या वर्णनम् अपि उपलभ्यते। अत्र भक्तेषु एव भगवत्त्वाऽऽविर्भाव - इयमेव स्नेहस्य पराकाष्ठा। प्रथमस्कन्धस्य द्वितीयाध्यायेऽपि उद्घोषितम् - ''स: वै पुसां परो धर्मो यतो भक्तिरधोक्षजे । अहैतुक्यव्यवहिता ययात्मा सम्प्रसीदति।।'' ईदृशी भक्ति: आत्मन्येव भवति। कृष्णोऽहं पश्यत् गतिम्। कृष्णायन्त्यपिबत्स्तनम् - इत्यादि गोपीवचनैरपि इदं स्पष्टम्।[३] एतस्या: भक्तेरङ्गद्वयं भगवान् भक्तश्चेति सिद्ध्यति।

अत्र भगवानिति कृष्णभावमापन्न: परब्रह्मैव। तस्यैव ब्रह्मणो भक्तिसिद्ध्यर्थ आविष्कृतानि रूपान्तराण्येव- 'गोपिका:'। ता: भगवत: रूपान्तरा: एव। तत्र गोपा: भगवन्तं कृष्णम् भजन्ते, भगवांश्च तान् भजते। आत्मा आत्मना सह रमते - ''रेमे रमेशो व्रजसुन्दरीभि: यथार्भक: स्वप्रतिबिम्बविभ्रम:। [४] वस्तुत: इदमेव सारम् ।

ये चात्र पञ्चाध्यायेषु विविधा: प्रसङ्गा: वर्णिता: भक्तिरसलहर्य एव। यश्च गोपीनां भगवत: प्रति प्रेमातिशय: स: सम्बन्ध: समयबन्धरहित:, शुद्धभक्तिरूपश्च। गोपीभि:

काऽपि लौकिकी कामना न प्रार्थिता।[५] परं ताभिः कामस्य सर्वथानाशः विशुद्धपरमतत्त्वे विलय एवयाचितः।[६] भगवत्कृता च गोपीनां भक्तिः समयबन्धसहिता भक्तिः। यदि जीवः भगवदर्थं लोकस्य परित्यागं करोति तदा सः प्रसीदति। न हि लोकवेदस्वपरित्यागरहिता भक्तिः भगवत्प्रीतये।[७] लोकवेदस्वपरित्यागः एवात्र समयः। गोपीभिः ईदृशी एव भक्तिः कृता, सैव निर्गुणा भक्तिः। द्रष्टव्यमेतत् गीतायामपि-

''अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ।।'' इति

अत्र 'अनन्य' पदं लोकवेदस्वपरित्यागम् एव सूचयति। इत्थंभूताः भक्ताः भगवत्सकाशात् कमपि भोगमनभिलषन्ति। तेषां कृते लौकिकपारलौकिकसुखेषु स्पृहा न भवति। स्वयं भगवानपि तान् प्रति फलप्रदाने न कुण्ठितः भवति । तादृशानां भक्तानाम् अग्रे भगवान् स्वस्यापि दरिद्रताया गौणत्वञ्च स्वीकरोति। यथा-

''न पारयेयं निरवद्यसंयुजां स्वसाधुकृत्यं विबुधायुषापि वः ।
या मा भजन् दुर्जरगेहशृङ्खलाः सवृश्चय तद् वः प्रतियातुं साधुना।[८] अतएव गोप्यो मुक्तिसुखापेक्षमाणानां संन्यासिनामपि प्रवराः सन्यासिन्यः। एतादृशेभ्यः भक्तेभ्यः अन्यत् किञ्चिदपि दानमनुचितमपर्याप्तञ्च मन्यमानः भगवान् स्वात्मानं समर्पयति। इत्थं भक्तेभ्यः भगवतात्मदानमैव रासलीलायाः परमरहस्यम्। अस्यां लीलायां भक्ता भगवांश्च सर्वथा एकीभावम् आप्नुवन्ति। ''एकमेवाद्वितीयं ब्रह्म'' - एतदेव रासलीलायाः रहस्यम्। इत्थंभूतः भक्तः हृद्रोगं नाम सर्वविषयाभिलाषमपहाय एतादृशीं भक्तिं लभते। गोपिकारूपजीवः मुक्तोजायते। स्वस्वरूपे रममाणः आत्मा परमानन्दं लभते।[९] अतः सर्वथा परमश्रद्धापूर्वकम् ईदृशी एव भक्तिः कर्त्तव्या। अनेन सुस्पष्टमिदं यत् निर्व्याजरूपा निष्कामरूपा भक्तिरेव ज्ञानापेक्षया सरला श्रेयसी च।

---

**सन्दर्भाः**

१. श्रीमद्भागवतपुराणम् - १०.३३.२९ ।
२. तदेव - १०.३३.३०-३४।
३. तदेव - १०.३०.४-२३।
४. तदेव - १०.३३.१७।
५. तदेव - १०.२९.३१।
६. तदेव - १०.२९.४१।
७. तदेव - १०.३२.२१।
८. तदेव - १०.३२.२२।
९. तदेव - १०.३३.४० ।

—०—

*एसोसिएट् प्रोफेसर*
*आर्य कन्या पीजी कॉलेज, हापुड (उत्तर प्रदेश)*

# वेदारम्भसंस्कार:

*राहुलकुमार झा*

"जन्मना जायते शूद्र: संस्काराद्द्विज उच्यते ।" इति स्मृते: संस्काराणां सम्पादनीयता विधीयते ।[१] शास्त्रेषु वेदाध्ययनं त्रैवर्णिकानां कृते विहितम् – "स्वाध्ययोऽध्येतव्य:" इति ।[२] मनुरपि उपदिशति –

"योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम् ।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्तव: ।।" इति ।

स्वाध्यायविधिमूलकमेव [३]याज्ञवल्क्यस्यापि वचनम् –

"वेद एव द्विजातीनां नि:श्रेयस्कर: पर: ।
यं यं क्रतुमधीयेत तस्य तस्याप्नुयात् फलम् ।।
त्रिर्वित्तपूर्णेवृथिवीदानस्य फलमश्नुते ।
तपसश्च परस्येह नित्यं स्याध्यायवान् द्विज: ।।" इत्यादि ।

एतावता वेदाध्ययनमनिवार्यं कृते द्विजातीनामिति सिद्धम् । सम्प्रति संस्कारत्वं स्वातन्त्र्येण अस्य कदा स्वीकृतम् इति विवेचनीयम् । तत्र प्रथमं हि उपनयनेन सार्धमेव वेदाध्ययनाराम्भ: सञ्जायते स्म । अत एव याज्ञवल्क्येनोक्तम् –

"उपनीय गुरु: शिष्यं महाव्याहृतिपूर्वकम् ।
वेदमध्यापयेदेनं शौचाचारांश्च शिक्षयेत् ।।" इति ।

वस्तुत: इदमध्ययनं पुरोपनयनाङ्गमेवासीत् । अत एव गौतमेन वेदारम्भस्य पृथग्गणना कृता संस्काररूपेण । गौतममते हि वेदादम्: वेदव्रतान्तर्गत: एवासीत् । कालक्रमेण वेदव्रतानुष्ठाने क्षीणे जाते उपनयनात् प्रागेव च वेदेतराध्ययने प्रारब्धे वेदारम्भस्य संस्काररूपेण परिगणनं प्रारब्धम् । अस्य संस्कारत्वेन उल्लेख: सर्वप्रथमं व्यासेन कृत: । पश्चात् च अन्यैरपि कियद्भिर्धर्मशास्त्रकारै: । अयं च संस्कार: अनुष्ठेय: समावर्त्तनात् पूर्वमेव –

"गुरवे तु वरं दत्त्वा स्नायद्वा तदनुज्ञया ।
वेदं व्रतानि वा पारं नीत्वा ह्युभयमेव वा ।।"[५] इति ।

उपनयनात् पश्चादिति च सिद्धमेव, तत: पूर्वं वेदाध्ययनाधिकाराभावात् । तत्र "स्वाध्यायोऽध्येतव्य:" इति अध्ययनविधि: स्वशाखाया एवाध्ययनं विधत्ते । अत एव कुमरिलेनोक्तम् – "अत्र स्वाध्यायशब्देन स्वशाखैका तु गृह्यते ।"[६] इति । स्वशाखा चात्र परम्परागता शाखैव गीयते । स्वशाखाध्ययनमकृत्वैव परशखाध्ययनं नैव कदापि कार्यम् । यस्तु मोहादज्ञानाद्वा स्वशाखामुत्सृज्य परशाखामधीते स "शाखारण्ड:" इत्युपाधिभाक्, सर्वकर्मभि: शूद्रवत् बहिष्कार्य:, वंशनाशक:, रौरवगामी, ब्रह्महा, अन्धे तमसि च मज्जति । अत: स्वशाखां प्रथमं पठेत् । "वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम्" इत्यादिमन्वादिवाक्येन स्पष्टं विहितत्वात् । तत्र वेदान्तरीत्याऽपि शाखा प्रथमं सैवाध्येया या पूर्वपरिगृहीता न तु या काचिदपि । न चैतावता मन्तव्यं यदन्या: शाखा नाध्येतव्या एव, स्वीयपरस्परागृहीतस्वशाखाध्ययनानन्तरं पितृपितामहादिपरिगृहीतशाखा-न्तराध्ययने संवृत्ते शाखान्तराध्ययनस्य सति सम्भवे समुचितत्वात् । अत एव मनुनापि कथितम् – "वेद: कुत्स्नोऽधिगन्तव्य: सरहस्यो द्विजन्मना ।"[७] इति । अत्र प्रकाशकृतो वर्णयन्ति – "कृत्स्न इति वेदविशेषणं वेदशब्दस्य शाखापरत्वेन तस्या एव कृत्स्नत्वमभिधत्ते" इति । तत्तु न युक्तम् । असति विशेषानुशासने सङ्कोचस्यनुचितत्वात् । अत एव मन्वर्थमुक्तावलीकृतापि "समग्रवेदो मन्त्रब्राह्मणात्मक: सोपनिषत्कोऽप्यध्येतव्य:" इत्युक्तम् । अत एव च "इच्छातस्त्वनेकवेदाध्ययनम्" इति मेधातिथिरपि प्राह ।

तच्चेदं-वेदाध्ययनं साङ्गं विधेयम्, तैर्विना तदर्थज्ञानानुपद्यात् । अत एव श्रुति: – "ब्राह्मणेन निष्कारणो धर्म: पडङ्गो वेदोऽध्येयो ज्ञेयश्च" इति । अत्रायं विशेष: – येषां

गौतमादीनां मते षड्ङ्गस्य वेदत्वं तेषां वेदाध्ययनविधिनैवाङ्गानामप्यध्ययनं सिद्ध्यति, येषां पुनर्बौधायनादीनां मन्त्रब्राह्मणयोरेव वेदत्वं तेषां कृते ब्राह्मणेनेत्यादिरेवाङ्गविधिरिति । अत्र स्वाध्यायविधिविहितं वेदाध्ययनमर्थावबोधपर्यन्तं भट्टगुर्वादयो मन्यन्ते । सायणेन पुनरक्षरग्रहणान्तमेव स्वध्यायाविधिर्मत्वा ब्राह्मणेत्यादिविधिनार्थज्ञानस्य विहितत्वं स्वीकृतम् । तत्रानयोः पक्षयोर्मध्ये पूर्वमतमेव स्मृतिकारादिसम्मतम् । अत एव पराशरेण, लघुव्यासेन निरुक्तादौ चार्थज्ञानस्य भूयोभूयः प्रशंसनं कृतम् । मनूक्तस्य वेदाभ्यासस्याप्ययमेवार्थः, अभ्यासस्यार्थज्ञाननियतत्वावगमात् । स चायं वेदारम्भः विद्यारम्भप्रसङ्गोदिते शुभसमये मातृपूजनाभ्युदयिकश्राद्धानन्तरं गुरुणाऽग्निस्थापनापूर्वकं कारयितव्यः । अग्नेः पश्चिमतो हि शिष्य उपविशेत् गुर्वनुज्ञातः । ततश्च सर्वप्रायश्चित्तादिहोमः। तदनन्तरं ऋग्वेदपिपठिषुणा अग्नये पृथिव्यै आज्याहुतिद्वयं, यजु दिक्चन्द्राभ्यां देयम् । सर्वारम्भे सर्वेभ्यो युगपदेवाज्याहुतीः दद्यात् । ब्रह्मछन्दः-प्रजापतिभ्योऽपि आज्याहुतीः दद्यात् । अन्ते च दक्षिणामधिगत्याचार्यो वेदमध्यापयेत् । अत्राध्येतुः विषये मनूक्तं स्तर्त्तव्यम् – व्यत्यस्तपाणिना कार्यमुपसंग्रहणं गुरोः ।
सव्येन सव्यः स्प्रष्टव्यो दक्षिणेन च दक्षिणः ।।
अध्येष्यमाणस्तु गुरुर्नित्यकालमतन्द्रितः ।
"अधिष्व भोः" इति ब्रूयाद्विरामोस्त्विति चारभेत् ।।
ब्रह्मणः प्रणवं कुर्यादादावन्ते च सर्वदा ।
क्षरत्यनोङ्कृतं पूर्वं पुरस्ताच्च विशीर्यति । इति ।

अध्यापकश्चात्र ब्राह्मण एव नेतरः । क्षत्रियोऽपि क्षत्रियवैश्ययोः, वैश्यो वैश्यम् । ब्राह्मणः पुनस्त्रयाणामपि वर्णनाध्यापनेऽधिकृतः । परन्तु क्षत्रियादिभ्योऽपि ब्राह्मणादध्ययनमेव मुख्यम्, क्षत्रियादिभ्यस्तु आपत्काल एवेति धर्मशास्त्रसिद्धान्तः । अध्यापकश्च वेदस्य द्विविधः – आचार्य उपाध्यायश्च । तत्राचार्यः –

उपनीय तु यः शिष्यं शिक्षयेच्छौचमादितः ।
संकल्प सरहस्यं च तमाचार्यं प्रचक्षते ।। इति ।

उपाध्यायोऽपि तदुक्त एव – एकदेशं तु वेदस्य वेदाङ्गान्यथवा पुनः ।
योऽध्यापयति वृत्त्यर्थमुपाध्यायः स उच्यते ।।[८] इति ।

आभ्यामतिरिक्तः पिता एकोऽध्यापकः गुरुपदवाच्यः । वेदाध्यापको हि त्रितयकृत्यं विधित्समाप्यैवाध्यापयेत्। न कदापि शय्यारुढः अध्यापयेत् । यदि शिष्यः कदाचिदुल्लंघयेत् तदाज्ञां तर्हि रज्ज्वा वंशदण्डेन वा ताडनीयोऽपि सः । परन्तूत्तमाङ्गे ताडनं प्रतिषिद्धम् । एतावता सर्वेणेदमेव सिद्ध्यति यत् शिष्य-शिक्षकाभ्यां यथायथमाचार-परिपालनं कुर्वद्भ्यामेवाध्ययनाध्यापने कार्ये । शिक्षकस्याचरणं हि शिष्यशिक्षाजनकं यथा स्यात्तथाचरणीयं शिक्षकेण । शिष्योऽपि शिक्षकेण सह सर्वदैवसम्मनपरिष्कृतं व्यवहारं नम्रः सन् कुर्यात् । एतेन गुरुशिष्ययोरानुकूल्येनाध्ययनादिकार्यं क्रियमाणं शीघ्रं सफलं भवति । इतरथा तु फलाभावः इति ।

**सन्दर्भाः —**

१. स्कन्दपुराण-नागरखण्डः – २३९.३१ ।
२. मनुस्मृतिः – २.६८ ।
३. याज्ञवल्क्यस्मृतिः – १.४०, ४८ ।
४. सा एव – १.१५ ।
५. सा एव – १.५१ ।
६. मीमांसा-तन्त्रवार्त्तिकम् ।
७. मनुस्मृति-द्वितीयाध्यायः ।
८. मनुस्मृतिः – २.७२-७४ ।

—o—

*विद्यावारिधि (Ph.D.) शोधच्छात्रः, वेदविभागः*
*श्रीसोमनाथसंस्कृतविश्वविद्यालयः, वेरावलम् (गुजरात)*

IMPACT FACTOR : 3.105 PRACI SUDHA ISSN 2249 - 2313
A NATIONAL PEER REVIEWED HALF-YEARLY SANSKRIT RESEARCH JOURNAL

# DECLARATION

| | |
|---|---|
| Name of the Jounal | PRACI SUDHA |
| Language | Sanskrit |
| Period of Publication | Half-Yearly |
| Time of Publication | March(October - March)<br>September (April - September) |
| Name of the Publisher | Prof. Biswanath Swain |
| Address | General Secretary,<br>Purusottam Research Academy<br>of Indology, Puri, Odisha<br>Email : biswanathpuri1958@gmail.com<br>pracisudha2013@gmail.com |
| Name of the Printer | Prof. Biswanath Swain |
| Nationality | Indian |
| Owner | Prof. Biswanath Swain, General Secretary,<br>Purusottam Research Academy of Indology,<br>Sarvodaya Nagar, Puri - 752002, Odisha |
| Name of the Editor | Prof. Biswanath Swain, (Retd.Principal)<br>General Secretary, Purusottam<br>Research Academy of Indology,<br>Sarvodaya Nagar, Puri - 752002, Odisha<br>Mob.: +91 9438134700<br>Email : biswanathpuri1958@gmail.com<br>pracisudha2013@gmail.com |
| Nationality | Indian |
| Printing Press | Sri Narayan Press, Bali Sahi, Puri-752001 |
| Annual Subscription | Rs. 100/- |
| Price of the each issue | Rs. 50/- |

The above particulars are true to the best of my knowledge and belief.

**Dt - 31.03.2021** **Sd - Biswanath Swain**